THE

PRINCESS OF WALES

SARASWATI-BHAVANA TEXTS

No. 3.

---

THE

# VEDĀNTAKALPALATIKĀ

---



1920.

Price, Rs. 1-12-0.]

कारणताऽनङ्गीकारात् । अवच्छेदकस्य कल्पितत्वेऽपि अवच्छेद्यस्य वास्तवत्वं न विहन्यते । अत्र यद्रजतत्वेन भातं तच्छुक्तिद्रव्यमितिवत् तार्किकैराकाशस्य शब्दग्रहणे कर्णशष्कुलीसंबन्धस्य कल्पितस्यैवावच्छेदकत्वस्याङ्गीकारात् । मीमांसकैश्च कल्पितह्रस्वत्वदीर्घत्वादिसंसर्गावच्छिन्नानामेव वर्णानां यथार्थज्ञानक(१)र्तृत्वमिष्यते तद्वदस्माकं किन्न स्यात् । न च तत्र वास्तवसंबन्धेनोपपत्तिः, कर्णशष्कुलीसंयोगमात्रस्य निरवयवे नभसि सर्वात्मना वर्तमानत्वेनातिप्रसञ्जकत्वात्संबन्धान्तरमङ्गीकर्तव्यम् । तच्च नभसि कल्पितमेव वास्तवसंबन्धान्तराभावात् । एवं ध्वनिधर्माणां(२) ध्वनिगतत्वेन भाने वर्णानां विभूनामानुपूर्वीविशेषाऽज्ञानादतिप्रसङ्गेन ततोऽर्थबोधासंभवाद्वर्णनिष्ठत्वेनैव ह्रस्वत्वादिभानमङ्गीकर्तव्यम्, तच्च कल्पितमेव । प्रत्युतान्यथाख्यात्यभ्युपगमात् तेषामसतोऽपि संसर्गस्यावच्छेदकत्वम् । अस्माकं त्वनिर्वचनीयख्यात्यभ्युपगमात् असद्विलक्षणत्वेनार्थक्रियाकारित्वमुपपद्यत एव । अत एव चैतन्येऽद्वये प्रमाणजन्याऽपरोक्षान्तःकरणवृत्तेरेवाज्ञाननाशकत्वाङ्गीकारेऽपि न दोषः, पारमार्थि-

(१) B reads जनकत्व । (२) B reads वा after धर्माणां ।

THE

PRINCESS OF WALES

SARASVATĪ BHAVANA TEXTS

EDITED BY

GANGĀNĀTHA JHĀ

AND

GOPĪNĀTHA KAVIRĀJA

---

No. 3

---

THE

# VEDĀNTAKALPALATIKĀ

---

BENARES:
Printed by Dr. Jagannatha Prasad, M. B., B. S, proprietor,
E. J Lazarus & Co., at the Medical Hall Press.

---

1920

मधुसूदनविरचिता

# वेदान्तकल्पलतिका

THE

# Vedāntakalpalatikā

OF

MADHUSŪDANA SARASVATĪ

EDITED WITH INTRODUCTION ETC.

BY

RĀMĀJÑĀ PĀṆḌEYA VYĀKARAṆOPĀDHYĀYA,
LATE SADHOLAL SCHOLAR,
*Government Sanskrit Library, Benares.*

---

Printed by Dr. Jagannath Prasad, M. B., B. S., proprietor, E. J. Lazarus & Co., at the Medical Hall Press, Benares;
and
Published under the authority of the Government of the United Provinces by the Government Press, Allahabad.

---

GOVERNMENT SANSKRIT LIBRARY,
BENARES

---

1920.

## उपोद्घातः ।

सुविदितमेवैतदस्ति शास्त्रज्ञानाञ्जननिर्मलीकृतचक्षुषां विदुषाम्, यदर्थधर्मकाममोक्षाणां चतुर्णां पुरुषार्थानां शीर्षस्थानापन्नो मोक्ष एव परमः पुरुषार्थ इति । तत्र चान्यांस्त्रीन् पुरुषार्थानधिकृत्य तत्तदृषिभिर्यथायथं विभज्य शास्त्राणि समाम्नातानि । तेषामप्यन्तेव मोक्षशास्त्रे तात्पर्यावधारणेन मुमुक्षवोऽपि तानि तानि शास्त्राण्यधिगन्तव्यत्वबुद्ध्याऽधीयते । यद्यप्यन्यस्या अपि पञ्चदर्श्न्या मोक्षशास्त्रपदव्यवहार्यता युक्ता, तथापि तत्तच्छास्त्रैः प्रतिपादितस्य मोक्षस्य वास्तविकमोक्षलक्षणानाक्रान्ततयाऽस्यैव चतुरध्यायात्मकस्य शारीरकमीमांसादर्शनस्य निर्दुष्टमोक्षतत्साधनस्वरूपावधारकतया तत्प्रापकत्वे परमोपायभूततया च तात्त्विकमोक्षशास्त्रत्वमभ्युपगन्तव्यम् । अन्येषां शास्त्राणां पञ्चकोशव्युत्पादनवदन्तेव वेदान्तदर्शने तातपर्यावधारणेन लक्षणया मोक्षशास्त्रत्वव्यवहारेऽपि नास्ति काचित् क्षतिः ।

यद्यपि सर्वस्य वेदस्यान्तः परमतात्पर्यविषयो बोधकतासम्बन्धेन यत्रेतिव्युत्पत्त्या तत्त्वमस्यादि वाक्यमेव वेदान्तशब्दाभिधेयम्, तथापि तदर्थव्युत्पादकतया तदुपोद्बलकरूपतया च चतुरध्यायीलक्षणस्य ब्रह्ममीमांसादर्शनस्यापि वेदान्तपदबोध्यत्वे बाधकाभावः । अत एव तत्सिद्धान्तप्रतिपादकानामर्वाचीनानामपि निबन्धानां तत्पदव्यपदेशे नास्ति काचिद् विप्रतिपत्तिः । एवं च मोक्षशास्त्रापरपर्यायस्यास्य वेदान्तदर्शनस्योपेयतया व्यवस्थितस्य मोक्ष-

पदार्थस्य स्वरूपनिर्णयाय तत्साधनादिप्रदर्शनाय च तत्तद्वा-द्यभ्युपगतमोक्षतत्साधनादितत्स्वरूपप्रदर्शनपूर्वकं निरा-करणीयांश्चान् निराकरिष्णुभिः श्रीमधुसूदनसरस्वतीभिर्वे-दान्तकल्पलतिकानामकं प्रकरणं समारम्भि ।

ननु सर्वैरेव वेदान्तविद्भिर्मोक्षपदार्थः सम्यग् विचारित एवेति तत एव जिज्ञासूनामाकाङ्क्षोपशमः सेत्स्यतीति निष्प्र-योजन एवायं ग्रन्थनिर्माणप्रयास इतिचेदुच्यते ।

सन्ति यद्यपि बहवो निबन्धा मोक्षमपि विषयीकृत्य तत्तदाचार्यप्रवरैर्निबद्धाः, तथापि ते नैवं प्राञ्जलरूपेणास्ति-कनास्तिकाभिमतापवर्गतत्साधनादीन् प्रदर्श्य पराकृत्य चौप-निषदानुमतांस्तान् प्रादीदृशन् । अल्पीयस्यप्यस्मिन् ग्र-न्थेऽन्यैराचार्यैः सम्यग्रूपेणाप्रदर्शिता वाद्यन्तराभिमता मोक्ष-तत्साधनादयो महता सौष्ठवेनोपपादिता निराकृताश्च सन्ति । एतत्प्रसङ्गादन्येऽपि विषया एवमेव निरूपितास्तत्र दृग्गोचरीभवन्ति । अतएवैतैराचार्यैः प्रायः सर्वेष्वेव ग्रन्थेषु वेदान्तकल्पलतिकायां विस्तर' इत्याद्युपन्यस्यास्य ग्रन्थ-शिरोमणेः सुमहद् गौरवं समुद्भावितम् । साम्प्रतं समुपल-भ्यमानेषु प्रकृताचार्यप्रणीतेषु निबन्धेष्वस्यैव ग्रन्थरत्नस्य सर्वापेक्षया प्राचीनत्वं प्रतीयते । तथा च नैव पुरातनैरन्य-दीयैर्ग्रन्थैर्गतार्थताऽस्य ग्रन्थप्रवरस्येत्यतिरोहितमेव स-र्वेषां विपश्चिताम् ।

यद्यप्येतन्मतेऽपि श्रीपूज्यपादभगवच्छङ्कराचार्याभि-मतमेव मोक्षस्वरूपम्, तथापि 'भगवता नीलाचलनायकेन' 'नीलाचलनाथेन' इत्यादिपदान्युपाददानैरेतैस्तत्सम्पत्तौ वि-रजाक्षेत्रस्थस्य जगन्नाथस्य भगवतो भक्तेरावश्यकीत्वमपि स्पष्टं स्वीकृतम् ।

नन्वेतैर्निर्मितेषु ग्रन्थेषु किमपेक्षयाऽस्य प्राचीनत्वं किमपेक्षया चार्वाचीनत्वमिति चेत्, उच्यते तत्र तावदियं वेदान्तकल्पलतिकाऽद्वैतसिद्धेस्तु पूर्वमेव निर्मिता, "उपपत्त्यन्तरं चात्र सिद्धान्तबिन्दु-कल्पलतिकादावस्माभिरभिहितम्" (१) "सिद्धान्तबिन्दुकल्पलतिकयो विंस्तर" (२) इत्यादिना तत्र तन्नामग्रहणात् अत्र चाद्वैतसिद्धेर्नाम्नोऽनुपलम्भात्।

एवमेव महिम्नः स्तोत्रस्य टीकातोऽप्यस्याः प्राग्भवत्वं सिद्ध्यति, विस्तरेण चात्र युक्तयो वेदान्तकल्पलतिकायामनुसन्धेयाः" (३) "यथा च शब्दादपरोक्षनिर्विकल्पकबोधोत्पत्तिस्तथा प्रपञ्चितमस्माभिर्वेदान्तकल्पलतिकायाम्" (४) इत्यादिना तत्र तन्नामोल्लेखात्।

अस्यां (५) च सिद्धान्तबिन्दुनामोपन्यासात् तत्र चास्य नामोपादानात् पूर्वापरभावनिश्चयस्य दुष्करतया द्वयोः समानकालभवत्वमभ्युपगन्तव्यम्। एतेन ग्रन्थकृतः पूर्वं ग्रन्थान्निर्माय तत्र च विषयन्यूनाधिकभावं समालोच्य परस्परं नामानि संयोजयन्तीति प्रतीयते। श्रीहर्षोदयनाचार्यप्रभृतिग्रन्थेष्वपीयं रीतिर्दृश्यते।

---

(१) पृ० ११७ पं० ८ दृष्टिसृष्ट्युपपत्तौ। (२) पृ० ८३५-पं० ११ (अद्वैतमञ्जरीसिरीज)। (३) निर्णयसागरीयः पृ० ५-पं० ११ (४) पृ० १६-पं० ३। (५) पृ० ८७ पं० ७

अद्वैतसिद्धौ गीतानिबन्धननामग्रहणेन (१)गीतानिबन्धने(२) श्रीमद्भागवतटीकायां च(३)भक्तिरसायननामोपन्यासेन भक्तिरसायने(४)कल्पलतिकानाम्नः संचारेण च सर्वापेक्षयाऽस्याः प्राचीनत्वं समायाति ।

अद्वैतरत्नरक्षणस्य तु समुपलभ्यमानानां सर्वेषां ग्रन्थानामपेक्षयाऽर्वाचीनत्वं युक्तियुक्तं भाति" । "शब्दातिरिक्तं चात्मविषयं प्रमाणं नास्तीत्यादि निरूपितमद्वैतसिद्धिवेदान्तकल्पलतिकयो रिति नेह प्रपञ्च्यते(५)"वस्तुतस्तु मननस्य श्रवणाङ्गत्वान्न मननविधेर्विचारप्रयोजकत्वम् । किन्तु साङ्गश्रवणविधेरेवेति व्युत्पादितमद्वैतसिद्धौ"(६) "मुख्याया असम्भवे जघन्याया एव वृत्तेर्न्याय्यत्वात्, उपपादितं चैतदद्वैतसिद्धौ" इत्यादिना बहुषु स्थलेषु अद्वैतसिद्धेर्नाम्नः समुपलम्भात् । तथा च महिम्नस्तोत्रसंक्षेपशारीरकयोष्टीकातोऽप्यस्याद्वैतरत्नरक्षणस्यार्वाचीनत्वे साम्प्रतं दृढं प्रमाणं नोपलब्धम्, नापि संक्षेपशारीरकटीकायाः किमपेक्षया प्राचीनत्वं किमपेक्षया चार्वाचीनत्वमिति निर्णेतुं शक्यम् ।

एते श्रीमन्तो मधुसूदनसरस्वत्यः कुत्रत्याः किञ्चैषां वृत्तम्, कश्च समय इत्यादि विषयानधिकृत्य यत्किञ्चिदुच्यते ।

---

(१) पृ. २३५ - पं० १० - (२) गी, टी, पृ ५६० - पं० ३ - ।
(३) पृ, १५ - पं० १० । (४) पृ ३ पं० ६—७ (५) पृ० ४४ पं० २३
(६) पृ० ८ पं० ३७—३८

"नीलाचलनायकेन नारायणेनानुगृहीताः" इत्यत्र नीलाचलनायकपदेन विरजाक्षेत्रस्थस्य जगन्नाथस्यैव भगवतो ग्रहणस्य सिद्धतया तस्मिन् समये प्रायः सर्वत्रैव वङ्गदेशे तद्भक्तेः प्राचुर्येण विद्यमानत्वादेतैरपि स्वोपास्यदेवस्य तस्यैव नामोपन्यासस्य सम्भाव्यमानत्वादेषां वङ्गदेशोद्भवत्वं प्रतीयते।

अपि चैतच्छिष्येण पुरुषोत्तमसरस्वत्या सिद्धान्तबिन्दुटीकायां "बलभद्रो भट्टाचार्यः कश्चन भक्तशिष्यः परमवेदान्तशास्त्रनिष्णात" इत्यत्र बलभद्रस्य भट्टाचार्यपदेन विशेषणात्, "आचार्याणां सेवकब्रह्मचारिणः" इत्यस्य च गौडब्रह्मानन्देनोक्तत्वात् तस्मिन् समये भट्टाचार्यशब्दव्यवहारस्य वङ्गदेशीयेष्वेव प्रसिद्धेः, प्रियशिष्यस्य तद्देशीयत्वसिद्ध्या, नारायणतीर्थेन च सिद्धान्तबिन्दोर्बृहट्टीकायाम् "असौष्ठवम्" इति प्रतीकमुपादाय "भाष्यभामतीविवरणाद्यपेक्षयाऽपि कठिनत्वरूपं तन्ममैव न गुरोरित्यर्थः, अखिलविद्याप्रवीणतार्किकशिरोमणिभट्टाचार्यरीत्यनुसरणादिति भावः" इत्यनेनैतद्गुरोरपि भट्टाचार्यपदेन विशेषणात्तत्त्वसिद्ध्या च तन्मध्यपातिनामाचार्याणामपि वङ्गदेशीयत्वं निर्विवादम्।

उपलब्धार्थप्रामाण्येन तु तत्रभवतां मूलपुरुषो राममिश्रो नाम वङ्गदेशाभिजनानां ब्राह्मणानां वंशोद्भवो वैदिको ब्राह्मण आसीत्। एतेन च फरीदपुरमण्डलान्तर्गत "कोटालीपाड़ा" नामको ग्रामो वासस्थानत्वेन कल्पित इतितद्वंशीयकुलपञ्जिकातः समवगम्यते। आचार्याणां पितृ-

पादास्तु प्रमोदनपुरन्दराचार्यत्याख्यया महतीं प्रख्यातिं जग्मुः तेषां च श्रीनाथचूडामणि—यादवानन्दन्यायाचार्य-कमलजनयन—वागीशगोस्वामीतिसुप्रसिद्धनामधेयाः परम-विधेयाश्चत्वारस्तनया बभूवुः। तत्र यादवानन्दन्यायाचार्याः प्रतापादित्यस्य राज्ञः सभाचूडामणितां प्रापुः। येषां चापूर्वं पाण्डित्यं समालोच्य प्रकृतेन राज्ञा ते "अविलम्ब-सारस्वती"त्युपमान्ना समलंचक्रिरे। माधवसरस्वतीत्याख्यया च तेषां सुप्रसिद्धिरासीत्। एत एव माधवसरस्वत्यः प्रकृताचार्याणां विद्यागुरवोऽन्यो वा नारायणभट्टपितृपादानां रामेश्वरभट्टानां शिष्यो माधवसरस्वतीति सम्यङ् नावधा-रयितुं पार्यते।

तृतीयः पुत्रः कमलजनयनस्तु नवद्वीपे न्यायशास्त्रमधीत्य प्रथमाश्रम एव संसारासारतामवगत्य समुपजातवैराग्यस्तुरी-याश्रमं(१)प्रतिपेदे। एषां विद्यागुरवो माधवसरस्वत्यः परम-गुरवश्च श्रीरामसरस्वत्य आसन्। आश्रमगुरवो विश्वेश्वर-

---

(१) श्रीमन्तो गदाधरभट्टाचार्या गुरूणां स्वर्गारोहणाद्धेतोः परी-क्षामदत्वा तद्वीयां पदवीं चालब्ध्वा तत्प्रयुक्तविशिष्टप्रतिष्ठाभावेन छात्राणां तदन्तिक उपस्थित्यभावात् पुष्पवाटिकायां गुल्मादीन्येव पाठयन्तः कालं यापयामासुः। तत्र प्रत्यहं गङ्गां स्नातुं गच्छन्तीभि-र्जनताभिर्विक्षिप्तं मन्यमानाभिरुपेक्षांचक्रिरे। परन्तु केचन तत्त्वा-न्वेषिणः किमयं पाठयतीति समुत्कण्ठया तदन्तिके गत्वा, पूर्वं तत्पाण्डित्यं पाठनशैलीं चात्यधार्य सर्वत्रैव तद्यशःप्रख्याप-यितुमारेभिरे। ततः प्रभृति चापरिमेया अन्तेवासिनस्तान् पर्य-वारयन्॥

सरस्वत्यो मधुसूदनसरस्वतीत्यभिधानेन तदानीं तं भूषयामासुः। ततःप्रभृति ते चतुःषष्टिघट्टे गोपालमठे स्वावासं प्राचीकल्पन् । तदानीमानन्दकाननान्तर्गतोऽप्ययं प्रदेशः कैश्चिदेव साहसिकधौरेयैः संप्राप्यागमनिर्गमो यथार्थतः काननमेवासीत् ।

"एते मुनिवर्या गदाधरचक्रवर्तिभिः सतीर्थ्यैः सह हरिरामतर्कवागीशमहाशयानामन्तिके न्यायशास्त्रमध्यगच्छन् ।

(१) अस्मिन्नेवाश्रमे वेदान्तादीनि शास्त्राणि माधवसरस्वतीनामन्तिके समध्यगतान्याचार्यैः। प्रायः सर्वे निबन्धा अप्येतैरस्मिन्नाश्रम एव निबद्धा इति तद्ग्रन्थाद्यन्तभागसमालोचनया प्रतीयते। कदाचिच्च स्वजन्मभूमिस्नेहेन सतीर्थ्यस्नेहेन वा धर्म्ये पथि सांसारिकान् प्रवर्तयितुं वा नवद्वीपं गतवत्स्वाचार्यवर्येषु तत्रत्याः सर्वे तार्किकाः पर्यत्रस्यन् । तदानीन्तनीमेतामवस्थां वर्णयता केनचित् कविना "नवद्वीपे समायाते मधुसूदनवाक्पतौ । चकम्पे तर्कवागीशः कातरोऽभूद् गदाधरः" इत्ययं श्लोको गीतः । एते च तत्रागत्य श्रीमतां गदाधरभट्टाचार्याणां सद्मनि निवसन्तस्तत्कल्पितामातिथ्यसत्क्रियां स्वीचक्रुः । तदानीं न्यायशास्त्रं पाठयन्तो गदाधरभट्टाचार्याः "किं भोश्छात्रावस्थायामेव संकलितानि टिप्पणादीनि पाठ्यन्ते" इति साक्रोशमाचार्यैः पृष्टाः "कालमात्रानुपपत्तिरिति" साभियोगमुक्तास्तैः साकं वादं समुपस्थापयामासुः । तदानीं च ते पूर्वावस्थातोऽपि महतीं पदार्थसम्पत्तिं शेमुषीवैभवं च तेषामवगम्य साञ्जलं प्रणिपेतुरिति किंवदन्तीति महामहोपाध्यायराखालदासन्यायाचार्यमहाशया भणन्ति स्म ।

काशीस्थदाक्षिणात्यपण्डितावलीप्रदर्शनावसरे इन्डि-यनएन्टिक्वेरी–(Ind Ant 1912, 9,) नामके मासिक-पत्रे "तेन राज्ञा वितीर्णानि हस्त्यश्वादीनि अस्वीकृत्य रामेश्वरभट्टः कल्य एव द्वारकां प्रतस्थे। तस्मिन्नेव मार्गे त्रिपञ्चाशदधिकचतुर्दशशततमे शकाब्दे चैत्रमासे (1514 A. D. March) तस्यैकः पुत्रः समजनि। तस्य च नारायणभट्टेतिनाम्ना महती प्रसिद्धिरभवत्। स च तत्रागत्य महाभाष्यं सुरेश्वरवार्तिकं च पाठयन् वर्ष-चतुष्टयं यावदुषित्वा प्रतिष्ठानपुरं समाजगाम। तत्रापि महता सम्मानेन सम्मानितश्चत्वारि वर्षाणि स्थित्वा परम-निःश्रेयसप्राप्तिहेतवे वाराणसीं प्रातिष्ठत। तस्य द्वितीयः पुत्रः श्रीधरस्तृतीयश्च कश्चन सुगृहीतनामधेयो मार्ग एव समजनिषाताम्। एषां त्रयाणां काश्यामेवोद्वाहः समपद्यत। नारायणभट्टानां जन्मसमये रामेश्वरभट्टो वयसा वृद्ध आसीत्। अत एव काश्यामागमनकाले सोऽतीव वार्द्धक्यमन्वभवत्। अस्य च त्रयः प्रधानाः शिष्या आसन् (१) अनन्त भट्टः (को-ङ्कणस्थचित्पावनः (२) दामोदरसरस्वती (३) माधवसरस्वती च। तत्र माधवसरस्वती श्रीमधुसूदनसरस्वतीनां गुरु-रासीदिति।

गृहस्थोऽयं नारायणभट्टः प्रवृत्तिमार्गविरोधिनो नि-वृत्तिमार्गस्य महान् विद्वेष्टाऽऽसीत्। वेदान्तदर्शननिष्णा-तोऽप्ययं प्रसिद्धैः सर्वैरेव संन्यासिभिः शास्त्रार्थे प्रायो बहु-परिकरतां प्रापत्। सोऽयं बहूनां वेदान्तग्रन्थानां निर्मा-तारं नरसिंहाश्रमं तत्काले सर्वत्र विख्यातकीर्तिमुपेन्द्रसर-स्वतीं सकलनैयायिकदिग्गजानां पराजेतारं तेषु च विस्ता-

रितकीर्तिमहिमानं मधुसूदनसरस्वत्याचार्यप्रवरं (१)च पराजित्य इति च लिखितम् (Indian Antiquary 1912, p. 10 Para 3 )·

नारायणभट्टेन वृत्तरत्नाकरटीका १६०२ विक्रमाब्दे ( 1545 A.D. ) निर्मिता । तदानीञ्च स वयसा सप्तषष्टिवर्षीय आसीदिति पूर्वप्रदर्शिततज्जन्मसमयालोचनया प्रतीयत इति । एतेन मधुसूदनसरस्वतीनां नारायणभट्टानां च समानकालस्थितिकत्वं सतायाति । एवं च षोडशशताब्द्या मध्ये मधुसूदनसरस्वतीनां सत्तायां नास्ति काचिद् विप्रतिपत्तिः ।

एतैराचार्यैस्तुरीयाश्रमेऽपि बहवः शिष्या अध्यापिता इति पूर्वसन्दर्भावलोकनेन निश्चीयते, वक्ष्यमाणप्रघट्टकप्रामाण्याच्च ।

तथाहि अलवरराजधानीस्थसरस्वतीभवने विद्यमानायां पुरुषोत्तमसरस्वतीनिर्मितायां सिद्धान्ततत्त्वबिन्दुटीकायाम् आदौ (Beginning) "श्रीधरं श्रीगुरुं नत्वा नौमि श्रीपादमादरात् । विद्यागुरुं गुरुमिव सुराणां मधुसूदनम्" इत्युक्त्वा, अन्ते च (End) "बलभद्रो भट्टाचार्यः कश्चन सम्यग् भक्तशिष्यः परमवेदान्तशास्त्रनिष्णातः' इत्युक्त्वा च बलभद्रपुरुषोत्तमसरस्वत्योस्तच्छिष्यत्वं सिद्ध्यति । अपि च शेषगोविन्दनिर्मितायां भ-

(१) टि० कौशिकवंश्यानां पण्डितानामितिवृत्त म० म० पं० हर प्रसादशास्त्रिणा गाधिवंशानुचरितमवलम्ब्योपन्यस्तम् ।

नारायणभट्टो मधुसूदनसरस्वतीः पराजित्य इत्यंशस्य प्रकृतसरस्वतीग्रन्थरसास्वादतृप्तैर्विद्वद्भिरविश्वसनीयत्वेपि समयसाम्ये गाधिवंशानुचरितस्य प्रामाण्यं न विहन्यते ।

गवत्पूज्यपादशङ्कराचार्यविरचितसर्वसिद्धान्तरहस्यटीकायाम् "यत्प्रसादाधीनसिद्धिपुरुषार्थचतुष्टयम् । सरस्वत्यवतारं तं वन्दे श्रीमधुसूदनम् ॥ इति श्रीशेषपण्डितसुतशेषगोविन्दविरचिते सर्वसिद्धान्तरहस्यविवरणे भाट्टपक्षः समाप्तः । गुरुणा मधुसूदनेन यद्व यत्करुणापूरितचेतसोपदिष्टम् । तदिदं प्रकटीकृतं मयास्मिन् भगवच्छङ्करपूज्यपादमूले ॥" इत्युक्त्यास्यापि तच्छिष्यत्वं सिद्धम् । अयं च शेषपण्डितः(१)प्रायः कृष्णपण्डितो भट्टोजिदीक्षितगुरुरेव प्रतीयते, शेषवंशे पण्डितपदस्य तत्रैव सिद्धेः । तस्यायं पुत्रः शेषगोविन्दो भट्टोजिदीक्षितसमकालोद्भव इत्यायातम् । तथा चैतद्गुरूणां मधुसूदनसरस्वतीनामपि स एव समय इत्यपि सिद्ध्यति ।

काश्यामाचार्याणां निवास आसीदिति किंवदन्ती 'गुरुं काशिराजम्" इत्यादिभगवद्गीताटीकास्थतदुक्त्यापि दृढीभवति । अत एव तुलसीदासगोस्वामी शास्त्रीयान् विषयानधिगन्तुमेषां समीपे समुपसर्पति स्मेति कथाऽपि युक्तैवाभाति ।

अपि च भट्टोजिदीक्षितभ्रातू रङ्गोजिभट्टस्य स्थितेः (1630 A. D.) १६३० ख्रीस्ताब्दे सिद्धतया तद्गुरोर्नृसिंहाश्रमस्य नारायणभट्टसामकालिकत्वं युक्तम्, उक्तग्रन्थोऽत्र प्रमाणम् । एवं गोस्वामितुलसीदासेनापि ( 1574A. D.) सं० १६३१ विक्रमाब्दे रामायणस्यारब्धतया काशिकराजकीयसरस्वतीभवने तद्धस्तलिखितपुस्तके(२) सं० १६४१=(1584A. D.)

(१) टि० शेषकृष्णसमयश्च १६०० षोडशशततमेशावीयाब्दसमीप एव सनिश्चितः ।

(२) सं० १६४१ मार्गशीर्षसुदि ७ रवौ लि० तुलसीदासेन ।

विक्रमाब्दस्योपन्यस्ततया अकबरे राज्ञि राज्यं प्रशासति गोस्वामितुलसीदासस्थितेः किंवदन्त्याऽप्यवगततया अकबरप्रतियोद्धुः प्रतापादित्यस्यापि स्थितिस्तदानीमेव सिद्ध्यति ।

एवं च प्रतापादित्याकबरगदाधरभट्टाचार्यतुलसीदासनृसिंहाश्रममधुसूदनसरस्वतीनां समकालस्थितिकत्वे सिद्धे, श्रीमधुसूदनसरस्वतीनां स्थितिसमयः किञ्चिन्न्यूनाधिकभावेन चत्वारिंशदधिकपञ्चदशशततमं ख्रीस्ताब्दमारभ्य त्रयोविंशत्यधिकषोडशशततमं यावत्प्रतीयते (1540 A. D-1623 A. D. ).

एतद्ग्रन्थमुद्रणमूलभूतं प्रधानं पुस्तकं केनचिन्मन्मित्रेण दत्तं संपूर्णं शुद्धं च । एकं च सरस्वतीभवनस्थं खण्डितं नातिशुद्धं च । यद्यपि प्रधानग्रन्थस्यैव पाठोऽङ्गीकृतोऽस्माभिः, तथापि द्वयोर्मध्ये यो ह्यत्यन्तं युक्ततरः स एवोपरि दत्तोऽधस्ताच्चापरः सन्निवेशितः। प्रधानपुस्तकस्य A. इति संज्ञा, द्वितीयस्य B. इति संज्ञा कल्पिता । यावत्पर्यन्तं पाठभेदा दृश्यन्ते तावत्पर्यन्त एव भागो द्वितीयपुस्तकस्योपलब्ध इति बोध्यम् ।

अस्मिन् कर्मणि प्रतीच्यशैल्यनुसारं श्रीमद्भिः काशिकराजकीयप्रधानसंस्कृतपाठशालाध्यक्षैः एतत्प्रदेशीयसंस्कृतविद्याभ्यासप्रचारकप्रधानाधिपतिभिः सी० आई० ई० पदविभूषितैः भूतपूर्वैर्डाक्टर ए० वेनिसमहोदयैः प्रवर्तिता वयं सम्यक् प्रायतिष्महि, परं च तत्रभवतां वेनिसमहोदयानामाकस्मिकमृत्योरिदं मुद्रणकार्यं प्रतिरुद्धमपि तत्पदमलंकुर्वाणैः श्रीमद्भिः म०म० डाक्टर् गङ्गानाथझामहोदयैर्विद्याभिवर्धनरसिकतया, एतत्प्रदेशीयसंस्कृतसाहित्योन्नतिविधायकतया च

परमोत्कर्षपदं नीत्वा पुनरपि समुज्जीवितम्। आशास्महे चैतैर्महाशयैः कश्चिदनागतभूतपूर्वां तत्त्वान्वेषणपद्धतिम् ।

अपि च सरस्वतीभवनाध्यक्षैः पण्डितप्रवरश्रीमद्गोपीनाथकविराजमहाशयैर्यथावत्साहाय्यमस्मभ्यं वितीर्णमिति तानपि धन्यवादपरम्पराभिः समर्चयामः । यैश्चास्मन्मित्रवर्यैः पुस्तकादिप्रदानादिनाऽस्माकमुत्साहः प्रवर्धितस्तेऽपि सुकीर्तिभाजो भवन्तु। परं चास्मिन् पुस्तके मुद्रणकार्यकर्तृणामनवहितचित्ततया बह्व्योऽशुद्धयो विद्यन्त एव, ताश्च शुद्धिपत्रे संशोधिता भवेयुः। इतः परं गुणैकपक्षपातिनो दोषज्ञान्सविनयं त्रुटिक्षमां प्रार्थयामहे । समर्प्यते चैतत्फलं परमहंसास्वादितचरणकमलच्चिन्मकरन्दाय भक्तजनमानसनिवासाय रमाविलासाय । इति शम् ।

काशिकराजकीय-
सरस्वतीभवनम् । } ।

रामाज्ञाशर्मपाण्डेयः

——:०:——

# विषयसूची ।

मङ्गलाचरणम्
तत्तद्दार्शनिकानां मतेन मुक्तिस्वरूपवर्णनम्
लौकायतिकानाम् पृ० २,४
तदेकदेशिनाम् पृ० २, १०
विज्ञानवादिनाम् (योगाचाराणाम्) पृ० २, १२
माध्यमिकानाम् पृ० २,१७
आर्हतानाम् पृ० २,२०
काणादानाम् पृ० ३,६
नैयायिकानाम् पृ० ३,१३
मीमांसकविशेषाणाम् पृ० ४,४
प्राभाकराणाम् पृ० ४,८
भाट्टानाम् पृ० ४,१२
तदनुयायिनां केषाञ्चित् पृ० ४,१६
सांख्यानाम् पृ० ४,१८
पातञ्जलानाम् पृ० ५,३
त्रिदण्डिनाम् पृ० ५,९
अन्येषाम् पृ० ५,१३
अपरेषाम् पृ० ५,१४
पाशुपतानाम् पृ० ५,१८
वैष्णवानाम् पृ० ५,२०
हैरण्यगर्भानाम् पृ० ५,२२
इतो भिन्नानामपरेषाम् पृ० ६,१
औपनिषदानाम् पृ० ६,३
तन्मतेऽविद्यानिवृत्त्युपलक्षित आत्मैव मोक्षः ६,५
प्रतिबन्धचतुष्टयरहितविद्यास्वरूपसाक्षात्कार-
स्तत्साधनम् पृ० ६,९
प्रतिबन्धचतुष्टयम् पृ० ६, १०
तन्निवर्तकानि पृ० ६, १२
असम्भावनादिपरिहाराय चतुर्लक्षणमीमांसा-

समारम्भः पृ० ६, १७
मुमुक्षोरधिकारिता पृ० ६, १९
पूर्वोक्तार्थसंक्षेपः पृ० ७,६
मुमुक्षोरिच्छाप्रवृत्त्योरुपपादनाय मोक्षस्वरूप-
वर्णनस्य पराभिमतमोक्षखण्डनस्य चावश्यकता-
प्रदर्शनम् पृ० ७,१
पराभिमतपक्षे मोक्षकामनानुदयः पृ० ७,८
तत्र नास्तिकमते पृ० ८,१
चार्वाकनये पृ० ८,१
सौगतनये
क्षणिकविज्ञानवादे पृ० ८,६ (योगाचारमते)
तत्रैव सर्वज्ञसन्तानान्तर्भावपक्षे पृ० ८,१३
शून्यवादे (माध्यमिकनये) पृ० ९,३
आर्हतनये पृ० ९,५
आस्तिकमते कारणोपपादनम् पृ० १०,२०—पृ० ११,२०
तत्र वैशेषिकतार्किकप्राभाकराणां खण्डनम् पृ० ११,२१ पृ० १४,८
भाट्टमतस्य विकल्प्य खण्डनम् पृ० १४,९
आत्मभिन्ननित्यसुखरूपमोक्षक्षपणम् पृ० १४,१२
तदभिन्नस्य तस्य खण्डनम् पृ० १५,८
नव्यमीमांसकाभ्युपगतमुक्तिदूषणम् पृ० १५,७
सांख्ययोगाभिमतमुक्तेर्विद्रावणम् पृ० १५,१२
अस्मिन् पक्षे नितरां मोक्षानुपपत्तिः पृ० १६,६
सर्वेष्वपि मतेषु आगन्तुकस्य मोक्षस्य जन्यत्वेन
विनाशित्वम् पृ० १६,८
दुःखाभावस्य गुणाधानलक्षणस्य मलक्षालनलक्षणस्य वा
ध्रुवमनित्यत्वम् पृ० १७,९
एकदेशिमतानां खण्डनम् पृ० १७,१८
त्रिदण्डिमतैकदेशिमतखण्डनम् पृ० १७,१८
ज्ञानकर्मसमुच्चयेन मुक्तिं वदतां त्रिदण्डिनाम्मत-
निरासः पृ० १८,१६

निर्विकारावस्थानस्वात्मरूपमोक्षवादिमतखण्डनम्
पृ० १९,११

सौगताभिमतमोक्षसाधनानां निरासः पृ० १९,१५

आर्हतीयमुक्तिसाधनस्यानादेयत्वम् पृ० २०,५

न्यायवैशेषिकाभिमतमोक्षसाधननिरसनम् पृ० २०,७

पदार्थतत्त्वज्ञानेन मुक्तिमभ्युपगच्छतां नैयायिकवैशेषिकाणां मोक्षसाधनताया विकल्प्य खण्डनम् पृ० २०,१६

निर्युक्तिकैकतरविकल्पपक्षपातोपेक्षणम् पृ० २१,५

प्रकृतिपुरुषविवेकस्य मुक्तिसाधनताखण्डनम् पृ० २१,७

प्राभाकरमते तत्त्वज्ञानस्यानुपयोगिताप्रदर्शनम् पृ० २१,१८

ज्ञानेन कर्मक्षय इति मतस्य खण्डनम् पृ० २२,१

पुनरपि सांख्यमतपर्यालोचनम् पृ० २२,१७

औपनिषदपक्षेऽनुपपत्तीरुपन्यस्य तन्निरासपूर्वकमवान्तरप्रकरणसमाप्तिपुरस्सरं सिद्धान्ताविष्कारारम्भः पृ० २३,६

सिद्धे पक्षे विरोधात्मकतानानुदयप्रदर्शनम् पृ० २३,१३

पूर्वपक्षतयाऽविद्यानिवृत्तिविशिष्टत्वेन कामनोदय
खण्डनम् २३,१९

द्वयोरप्याशङ्कयोः खण्डनारम्भः पृ० २४,५

अत्रैव प्रासङ्गिकसम्मतिरूपस्थापनम् पृ० २५,३

अविद्यानिवृत्तेर्दुर्निरूपत्वखण्डनम् पृ० २५,१६

तत्रेष्टसिद्धिकारमतेन तस्याः पञ्चमप्रकारत्वाभ्युपगमः
पृ० २५,९-१७

ज्ञानस्यैवात्मनोऽविद्यानिवृत्तित्वमिति सिद्धान्तः पृ० २८,९

ज्ञानं आत्मैवेत्यत्र ज्ञानस्योपलक्षणत्वमाशङ्क्य खण्डनम्
पृ० २८,१३

ज्ञानस्याज्ञाननिवर्तकत्वे विकल्प्य पूर्वपक्षोपन्यासः
पृ० २९,६

तत्र केवलचैतन्यस्य नाज्ञाननिवर्तकत्वम्, नापि वृत्तिरूपस्य पृ० २९,७–पृ० २९,१०

तदेव परोक्षत्वापरोक्षत्वाभ्यां विकल्प्य स्वमतेन चाप-
रोक्षत्वं निरूप्यानिर्मोक्षत्वापादनम् पृ० ३०,२० - पृ० ३१,१२

ज्ञाननिवर्त्याज्ञानस्वरूपविचारः पृ० ३१,११

ज्ञानाज्ञानयोरुभयाश्रयत्वेन निवर्त्यनिवर्तकभावानुपपत्तिः ३२,५

ब्रह्मणो ज्ञानविषयत्वमित्यत्र मनसो मानत्वं दूषयित्वा
वेदान्तवाक्यस्य मानत्वोपन्यासः ३३,३

वेदान्तवाक्यस्य मानत्वानुपपत्त्याशङ्का पृ० ३३,१४

ब्रह्मणि प्रमाणागोचरत्वम् पृ० ३४,२

वाक्यजन्यबोधे पदार्थज्ञानस्य कारणत्वात् पदवृत्त्या च
पदार्थबोधाद् ब्रह्मणश्च वृत्त्यविषयत्वात्प्रसङ्गाद् वृत्ति-
निरूपणम् पृ० ३४,१०

तार्किकाणान्मते शक्तेःस्वरूपम् पृ० ३४,१२

मीमांसकानाम् पृ० ३४,१५

तार्किकमतखण्डनम् पृ० ३४,१७

तन्मते शक्तेःस्वरूपसम्बन्धविशेषत्वखण्डनम् पृ० ३५,५

स्वाभाविकशब्दसामर्थ्यरूपशक्तेरसत्त्वमाशङ्क्य तन्निरा-
सः तत्रत्यदोषोद्धारश्च पृ० ३५,८

लक्षणोच्छेदापत्तिः, अन्विताभिधानवादेन तदुपपत्तिश्च
पृ० ३६,३

अभिहितान्वयवादेन च तदुपपत्तिः पृ० ३६,१३

आक्षेपो लक्षणा वेत्येतन्मतखण्डनम् पृ० ३७,८

वेदान्तिमतेन तन्निरूपणम् पृ० ३७,१२

रूढियोगभेदेन च तस्या द्वैविध्यम् पृ० ३७,१६

बाध्यबाधकभावे केषांचिन्मतम् पृ० ३८,८

पङ्कजादिपदे भाट्टानां नैयायिकानां च मतेन योगरूढ्या-
ख्या मुख्या वृत्तिः पृ० ३८,११

प्राभाकराणां वेदान्तिनाञ्च मतेन तत्खण्डनम् पृ० ३८,१४

अभ्युपगमवादेन तत्स्वीकारश्च पृ० ३९,७

जघन्याया द्वैविध्यम् पृ० ३९,८

उपचाराख्यापि तृतीया जघन्येत्येकेषां मतस्य ख-
ण्डनम् ४०,५
गौण्या लक्षणातोऽतिरिक्तत्वसिद्धान्तश्च पृ० ४०,१२
वैयाकरणाभिमतस्य षड्विधस्य शब्दस्य मुख्यजघन्य-
योरेवान्तर्भावः पृ० ४०,१४
आलङ्कारिकमतेन व्यञ्जनानिरूपणम् पृ० ४१,१
तन्निरासोऽभ्युपगमवादेन तत्स्वीकारश्च पृ० ४१,१६
जहत्स्वार्थादिभेदेन लक्षणायास्त्रैविध्योपपादनम् पृ० ४२,
तदुदाहरणप्रदर्शनपूर्वकम् अन्येषां तैर्थिकानां मतेन
तदुपोद्बलनञ्च पृ० ४२.६
तस्या द्वैविध्याशङ्का तन्निरासश्च पृ० ४३,१५
आसां वृत्तीनामद्वये ब्रह्मण्यसम्भवप्रतिपादनम् पृ० ४४,६
तत्र रूढेरसम्भवश्च प्रत्यक्षानुमानोपमानसाधर्म्यवैध-
र्म्यादिभिः शक्तिग्रहप्रदर्शनम् पृ० ४४,१४८,२
योगस्यापि तत्र नावसरः पृ० ४८,३
जहत्स्वार्थादिभेदेन भिन्नाया लक्षणायाश्च तत्र नाव-
काशः पृ० ४९,१
अभ्युच्चयवादेन स्वीकृताया व्यञ्जनाया अपि तत्रा-
सम्भवः पृ० ५०,१
पूर्वोक्तमेतदर्थं संक्षिप्याज्ञाननिवृत्त्युपलक्षितात्मनो मोक्ष-
त्वाभावपर्यनुयोगः पृ० ५०,७
कीदृशं पुरुषाणामज्ञाननिवर्तकमिति पूर्वपक्षोत्तरारम्भः,
तत्र ज्ञानस्वरूपस्य सत्यत्वे मिथ्यात्वे वा न दोषः
पृ० ५०,१३
अवच्छेदकस्य कल्पितत्वेऽपि अवच्छेद्यस्य वास्तवत्वा-
विघातः तथा तार्किकमीमांसकैरभ्युपगमात् पृ० ५१,१-५२,१६
मिथ्याभूतादपि ज्ञानात्पारमार्थिकब्रह्मप्राप्तेरवि-
रोधः पृ० ५२,१३
सप्रकारत्वनिष्प्रकारत्वविकल्पानुपपत्तिः पृ० ५२,१६

प्रमात्वाज्ञाननिवृत्त्योः कार्यकारणभावप्रदर्शनं तत्रापतितदोषोद्धारार्थमपेक्षितपदसन्निवेशस्तत्पदकृत्यादिकं च पृ० ५२,१९-५५,१५

सत्तावधारणरूपज्ञानस्याज्ञाननिवर्तकत्वम् पृ० ५५,१५-५६,५

क्लृप्तकार्यकारणभावस्य तार्किकमतसिद्धे निर्विकल्पकेऽपि व्याप्तिप्रदर्शनम् पृ० ५६,५

तैः सविकल्प्यार्थापरोक्षत्वेन रूपेण प्रमाविशेषणम् पृ० ५६,१९

तदयं निर्गलितार्थः पृ० ५७,३

ब्रह्मणि ज्ञानीयविषयताया असम्भवात्तद्विषयकज्ञानस्याप्यनुत्पत्तिः ५७,८

'अत्र ब्रूमः' इत्यादिना तन्निरासश्च । पृ० ५८,४

ब्रह्मणि ज्ञानीयविषयत्वाभावेऽपि ज्ञानस्य ब्रह्मविषयत्वसाधनम् । पृ० ५८,५

कल्पितविषयताया ब्रह्मणि स्वीकारेऽपि न तस्य कर्मत्वेन जडत्वापातः पृ० ५९,३

वृत्तिविषयताया जडत्वापादकत्वनिरासः पृ० ५९,११

फलव्याप्यत्वस्यैव जडत्वापादकत्वमिति मतं निरस्य चैतन्यव्याप्यत्वस्य जडत्वप्रयोजकत्वसाधनम् पृ० ५९,१७

वृत्त्युपरक्तचैतन्यस्य चैतन्यरूपत्वात्तद्व्याप्यत्वाभावः पृ० ६०,१२

कल्पितविषयतावत्कल्पितप्रकारतामापाद्य तन्निरासः, निष्प्रकारकज्ञानत्वं ब्रह्मविषयत्वनिगमनञ्च पृ० ६०,१८—६१,९

आद्यक्षणे वृत्तेर्निर्विकल्पकत्वाविरोधः पृ० ६१,१०

द्वितीयक्षणेऽज्ञानादिनिवृत्तिपूर्वकदेहाद्यवभासानां निवृत्त्या शुद्धचैतन्यस्थितया पुनः संसारस्यानावृत्तिः, पृ० ६१,१३—६२,७

अज्ञानस्य दृश्यत्वेन रूपेण निवर्त्यता, उक्तप्रमाविशेषत्वेन निवर्तकतेति कार्यकारणभावस्वीकारेण सकलदोषापनोदनम् पृ० ६२,८

स्वप्नाद्यध्यासस्य नाशवृत्तिशङ्का तूलाज्ञानस्य सत्तया तत्साधनञ्च पृ० ६२,१६.६३–१९

ज्ञानाज्ञानयोरध्यासत्वेन निवर्त्यनिवर्तकभावानुपपत्तिः- चैतन्यान्तःकरणयोस्तादात्म्याध्यासात्तन्निराकरणं च पृ० ६४,१

ज्ञानेनाविद्यानाशादर्शनात्तदनिवृत्तिमाशङ्क्य श्रुत्या श्रुतार्थापत्त्या च तत्साधनम् पृ० ६४,१३

प्रत्यक्षतोऽज्ञाननिवृत्त्यनुभवः पृ० ६५,१७

अज्ञानस्य ज्ञानानिवर्त्यत्वखण्डनम् पृ० ६६,६

तस्य विनाशित्वनिरूपणञ्च पृ० ६६,६–६६,१३

श्रुतिविषयत्वेन ब्रह्मणोऽनात्मत्वमाशङ्क्य तस्य श्रुतितात्पर्यविषयत्वेनानात्मत्वाभावसाधनम् पृ० ६६,१९

अविद्यायाः आत्मस्वरूपज्ञानेन निवृत्तिः पृ० ६७,११

शाब्दज्ञानस्यापरोक्षत्वम् पृ० ६८,१

तार्किकेभ्यो भिन्नानां केषांचिदन्येषां च मते उपपाद्य शाब्दपक्षखण्डनम् पृ० ६८,६

भावनाजन्यज्ञानस्य प्रामाण्याशङ्का पृ० ६८,१७

परोक्षज्ञानजन्यभावनाया अपरोक्षज्ञानजनकत्वं तथा च न तस्याः प्रामाण्यप्रयोजकत्वम् इत्यादिना तन्निरासश्च पृ० ७०,५

भावनायामनुभवकल्पनापेक्षया लाघवाच्छब्दस्यापरोक्षविषयत्वकल्पनम् इत्यादिना पूर्वोक्तसमर्थनं च पृ० ७०,१८

श्रुतिविरोधान्मनसः प्रामाण्याभावमुपपाद्य शब्देऽपि तमाशङ्क्य मुख्यवृत्त्यविषयत्वेन प्रामाण्यनिषेधश्रुतीर्व्यवस्थाप्य शब्दप्रामाण्यस्य समर्थनम् । ७१,९–७२,१७

आत्मनो मानाधीनत्वे श्रुतीरुपन्यस्य तत्र च मनसः कर्तृत्वमुपपाद्य तस्य करणत्वनिरासः पृ० ७२,१७-७५,७

सहकारिसहस्रेणापरोक्षज्ञानजनकत्वमाशङ्क्य तन्निरासः पृ० ७५,८
प्रत्यभिज्ञानदृष्टान्ते त्रिधा विवरणं प्रदर्श्यैकैकं तन्निरासः ७५,१४—७७,११
अन्यरीत्या शब्दप्रामाण्ये दोषमुद्भाव्य स्वरीत्या तत्प्रामाण्यव्यवस्थापनम् पृ० ७७,१९
मनन इव शब्दस्यापि परोक्षापरोक्षज्ञानजनकत्वम् प० ७७,१८
मनसोऽवच्छेदकद्वैविध्यवच्छब्दस्यापि द्वैरूप्याशङ्का तत्समाधिश्च प० ७८,३
असाधारणमनःसहकारित्वेन शब्दस्य प्रमाणान्तरत्वम् प० ७९,१६
शब्दस्येन्द्रियत्वाशङ्कोपोद्घातः प० ८०,१
शब्दस्येन्द्रियत्वव्यवहारापत्याशङ्का प० ८०,१८
उक्तरूपस्य नेन्द्रियत्वव्यवहारहेतुत्वम् पृ० ८१,१
कर्मेन्द्रियसत्तायां प्रमाणानि तद्विषये सांख्यमतक्षतिश्च पृ०८१,३
इन्द्रियलक्षणम् पृ० ८३,१
मनसः पञ्चभूतात्मकत्वमन्येषां चैकैकभूतात्मकत्वम् ८३,६
मनसः परमाणुत्वाभौतिकत्वयोर्निरासः पृ० ८४,१
इन्द्रियलक्षणम्, तदुपयोगितया पञ्चभ्यो भूतेभ्यस्तत्सृष्टिवर्णनं च प० ८५,१०—८७,५
वाचस्तैजसत्वखण्डनम् प० ८६,११
शब्दे इन्द्रियव्यवहारापत्त्यभावः प० ८७,१९
प्रत्यक्षत्वस्य नित्यज्ञानसाधारण्येन जातित्वनिरासः पृ० ८८,१५
अर्थनिष्ठापरोक्षत्वस्य दुर्निरूपत्वाशङ्का तत्समाधिश्च । पृ०८,८७
शब्दस्यापरोक्षज्ञानजनकत्वेऽपि विचारस्यावश्यकताप्रदर्शनम्, अज्ञाननिवृत्तौ क्रमप्रदर्शनं च पृ० ९०,१८
तत्र संक्षेपशारीरककारवचनोपन्यासः ९२,१
अविद्यानिवृत्त्युपलक्षित आत्मैव मोक्ष इत्युपसंहारश्च पृ० ९२,१९

:0:

॥ श्रीगणेशाय नमः ॥

# वेदान्तकल्पलतिका ।

---

मीमांसया कपटतो भुजगाम्बयेव
स्वाधीनतामुपनिषद्वनितेव नीता ॥
येनोद्धृतामृतफलेन गरुत्मतेव
तस्मै नमो भगवतेऽद्भुतशङ्कराय ॥ १ ॥

दुरापः शास्त्रार्थो नियतयतमानैरपि बुधै
र्न सम्प्राप्तुं शक्यो मलिनमतिना यद्यपि मया ॥
तथापि श्रीविश्वेश्वरचरणपङ्केरुहसुधा
सुधाराभिः सिक्तो न कथमपि रिक्तोऽस्मि भविता २

सत्तर्कपुष्पनिकरैः परमात्मबोध-
निष्ठाफलेन दधती परमां विभूतिम् ॥
शारीरकार्थसुरशाखिगता सुधीभि-
र्वेदान्तकल्पलतिकेयमुपासनीया ॥ ३ ॥

निर्धूय जैमिनि-पतञ्जलि-गौतमोक्तीः
काणाद-कापिल-शिवादिमतानि चाहम् ॥
श्रीव्यास-शङ्कर-सुरेश्वर-सूचितार्थ-
शुद्धिं व्यनज्मि विशदं मितभाषितेन ॥ ४ ॥

मुमुक्षूणामनुष्ठेयविक्षेपविनिवृत्तये ॥
मोक्षं ससाधनं वच्मि परपक्षनिरासतः ॥५॥

अथ मोक्षे तत्साधने च विप्रतिपद्यन्ते विपश्चितः।

तत्र लौकायतिकास्तावत्प्राकृतलोकानुसारिणो मनुष्यत्वादिविशिष्टभूतचतुष्टयसंघात एव चैतन्यं मन्यमाना नानागमपुराणानुमानादिमानान्तरप्रसिद्ध-मपि देहादिव्यतिरिक्तं चेतनं बन्धमोक्षभागिन-मशुद्धबुद्धयोऽपलपन्ति, नाऽप्रत्यक्षं प्रमाणमिति वदन्तः। तत्र कस्य मोक्षं प्रत्याशा।

तदेकदेशिनोऽपि प्रत्येकसमुच्चयाभ्यामिन्द्रि-याणि मनः प्राणं वा चेतनमुपगच्छन्तस्तथैव वञ्चकाः।

विज्ञानवादिनस्तु क्षणिकविज्ञानस्कन्धं देहे-न्द्रियादिव्यतिरिक्तमात्मत्वेन मन्यमानाश्चतुर्विधनै-रात्म्यभावनया तस्य सोपप्लवविज्ञानसन्तानस्याऽत्य-न्तोपरमं वा निरुपप्लवसर्वज्ञसन्तानान्तर्भावं वा मोक्षमिच्छन्ति।

माध्यमिकास्तु शून्यमात्रमात्मानमुपगतास्ततो न किञ्चिदपि तत्त्वमस्तीति शून्यभावनाप्रकर्षपर्य्य-न्तात् तत्त्वज्ञानाच्छून्यभावमेवापवर्गमाहुः।

आर्हतास्तु देहेन्द्रियादिव्यतिरिक्तं देहपरिमा-णमात्मानमभ्युपगम्य तस्य पुर्य्यष्टककर्माष्टकपरि-वेष्टितस्याऽऽर्हतशास्त्रोक्तेन तपसाऽऽत्मैकाकारसमा-

धिना परिपाकेन(१) चाष्टविधबन्धप्रध्वंसे सति सुखैकतानस्य निरावरणज्ञानस्य सन्ततोर्ध्वगमनमलोकाऽऽकाशगमनं वा मोक्षमाचक्षते, पञ्जरभञ्जन इव पञ्जरस्थस्य शुकस्य स्वातन्त्र्यम्। इदमेव च स्वातन्त्र्यं मोक्ष इति सिद्धम्(२)।

काणादास्तु देहेन्द्रियादिव्यतिरिक्तं विभुमात्मानं नवविशेषगुणाश्रयं कल्पयन्तो जल्पन्ति। द्रव्यगुणकर्मसामान्यविशेषसमवायानां षण्णां पदार्थानां साधर्म्यवैधर्म्याभ्यां यत्तत्त्वज्ञानं तत्पूर्वकादात्मतत्त्वसाक्षात्कारादीश्वरोपासनासहितान्नवानां वैशेषिकगुणानां प्रागभावासहवृत्तिः प्रध्वंस एवात्मनः कैवल्यमिति।

नैयायिकास्तु प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्ताऽवयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानामुद्देशलक्षणपरीक्षाभिरात्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखाऽपवर्गाख्यद्वादशविधप्रमेयनिष्कर्षेणात्मद्रव्यसाक्षात्कारात् श्रवणमननिदिध्यासनपूर्वकात् सवासनमिथ्याज्ञाननिवृत्तौ तत्कार्य्याणां रागद्वेषमोहानां निवृत्तिः, ततस्तत्कार्य्ययोः प्रवृत्तिपूर्वकयोर्धर्माऽधर्मयोः, ततः पूर्वार्जितकर्मणां कायव्यूहपूर्वकभोगेन क्षया-

(१) B. reads परिपाकेण (२) B. reads प्रसिद्धम्।

च्छरीरान्तराऽनारम्भः । ततो बाधलक्षणस्यैकविंश-तिप्रभेददुःखस्याऽत्यन्तविमोक्षोऽपवर्ग इति कल्प-यन्ति ।

अपरे तु ऐकभविकन्यायेनाऽऽत्मज्ञानमन्तरेणा-ऽपि निषिद्धकाम्ययोरननुष्ठानान्नित्यनैमित्तिकाऽनुष्ठाना-च्च नाऽऽगमिकर्मोत्पादः । विद्यमानस्य चोपभोगेन क्षयात्सकलकर्मोच्छेदलक्षणमपवर्गमाहुः ।

प्राभाकरा अपि वैदिककर्मानुष्ठानाद् विहिता-त्मज्ञानपूर्वकाद् देहेन्द्रियादिसम्बन्धस्य धर्माऽधर्म-परिक्षयनिमित्तमात्यन्तिकोच्छेदलक्षणं मोक्षं म-न्यन्ते ।

भाट्टास्तु ज्ञानकर्मसमुच्चयादेवात्मनो जडबोधा-त्मकस्य नित्यज्ञानं नित्यसुखञ्चोदेति । ततश्च विषय-विशेषाऽनपेक्षया नित्यज्ञानेन नित्यसुखाभिव्यक्ति-मु(१)क्तिरित्याहुः ।

मानसज्ञानेन नित्यसुखाभिव्यक्तिर्वा दुः(२)खाऽभा-वमात्रमेव वा मुक्तिरित्यपि तदीयाः केचित् ।

साङ्ख्यास्तु प्रकृतिपुरुषविवेकादनाद्यविवेकनि-वृत्तौ तं पुरुषं प्रति चरिताऽधिकारायाः प्रकृ(३)तेः पुनस्तद्भोगार्थाऽप्रवृत्तिरिति त्रिविधदुःखस्यैकान्तात्यन्त

---

(१) A omits मुक्तिः (२) B reads दुःखाभाव एव वा

(३) B reads प्रकृतेर्न पुनस्तद्भोगार्थो प्रवृत्तिः ।

निरोध एव स्वभावतः केवलस्यापि पुरुषस्य कैवल्यमित्याहुः ।

पातञ्जलास्तु प्रकृतिपुरुषविवेकेनाऽभ्यासवैराग्यपरिपाकाद्‌ यमनियमाऽऽसनप्राणायामप्रत्याहारधारणाध्यानसम्प्रज्ञातसमाधिपूर्वकात् परमेश्वरप्रसादजात् पञ्चविधानाञ्चित्तवृत्तीनान्निरोधादेव धर्ममेघशब्दितादसम्प्रज्ञातसमाधेः कैवल्यमिति कल्पयन्ति ।

त्रिदण्डिनस्तु जीवब्रह्मणोर्भेदाऽभेदमभ्युपेत्य ज्ञानकर्मसमुच्चयाभ्यासादेव कारणात्मके ब्रह्मणि कार्य्यात्मकजीवस्य कर्मवासनासहितभेदांशनिवृत्तिर्मोक्ष इति वदन्ति ।

परमेश्वरप्राप्तिरित्यन्ये ।

सतरङ्गनिस्तरङ्गभेदेन समुद्रद्वैविध्यवत् सविकारनिर्विकाररूपेणावस्थाद्वयं ब्रह्मणः परिकल्प्य ज्ञानकर्मसमुच्चयाभ्यासादेव सविकारावस्थापरित्यागेन निर्विकारावस्थाप्राप्तिरेव मोक्ष इत्यपरे ।

पाशुपतास्तु पाशुपतधर्माचरणात् पशुपतिसमीपगमनमेव पुनरावृत्तिरहितं मोक्ष इत्याहुः ।

एवं यथोक्तविष्णुभक्तिधर्माचरणाद्‌ विष्णुलोकगमनमेव मोक्ष इति वैष्णवाः ।

पञ्चाग्निविद्याद्युपासनैरर्चिरादिमार्गेण हिरण्यगर्भप्राप्तिरेव मोक्ष इति हैरण्यगर्भाः ।

एवमपरेऽपि स्वकपोलकल्पितश्रुतियुक्तिविरुद्ध-मेव बहु कल्पय(१)यन्ति ।

औपनिषदास्तु भगवता नीलाचलनायकेन नारायणेनानुगृही(२)ता निरतिशयानन्दबोधरूप आत्मैवानाद्यविद्यानिवृत्त्युपलक्षितो मोक्ष इत्याचक्षते । अविद्यायाश्च सर्वदुःखोपादानत्वात्तन्निवृत्त्याऽऽत्यन्तिकदुःखनिवृत्तिरप्युपपद्यते । तस्य(३) स्वरूपे साधनानपेक्षत्वेऽपि व्यञ्जकतया वेदान्तमहावाक्यकरणकस्तत्स्वरूपसाक्षात्कार एव प्रतिबन्धचतुष्टयरहितः सा(४)धनं मोक्ष इत्युपचर्य्यते । साधनप्रतिबन्धचतुष्टयञ्च विषयभोगवासना प्रमाणगताऽसम्भावना प्रमेयगताऽसम्भावना विपरीतभावना चेति । तत्र विषयासक्तेः श्रवणाङ्गभूताः शमदमादयो निवर्तकाः, प्रमाणगताऽसम्भावनायाः श्रवणं निवर्तकम्, प्रमेयगताऽसम्भावनाया मननं निवर्तकम्,(५) विपरीतभावनायाश्च(६) निदिध्यासनन्निवर्तकमिति । अतः श्रवणादिसम्पादनेनाऽसम्भावनादिपरिक्षयाय चतुर्लक्षणी शारीर(७)मीमांसा समारम्भि भगवता बादरायणेन । मोक्षकाम-

---

(१) B reads जल्पन्ति । (२) B reads नुगृहीतो । (३) B reads च after तस्य । (४) B reads साधनं । (५) निवर्तकम् । This reading is omitted by B (६) B omits च । (७) B reads शारीरक ।

श्चास्यामधिकारी, "शान्तो दान्त उपरतस्तितिक्षुः श्रद्धावित्तो भूत्वात्मन्येवात्मानं पश्येत्" इत्यादिश्रुत्युक्तशमदमा(१)द्युपबृंहित(२)विधिमूलके "अथातो ब्रह्मजिज्ञासा" इतिसूत्रे 'अथ'शब्देन शमादिविशिष्टस्य मुमुक्षोरेव सूत्रणात्।

तदयन्निर्गलितार्थः—शमादिसहितेन मुमुक्षुणा गुरुमुपसृत्य मोक्षसाधनब्रह्मात्मैक्यसाक्षात्कारप्रतिबन्धाऽसम्भावनादिनिवृत्तये चतुर्लक्षणी(३) मीमांसया वेदान्तवाक्यविचारः प्रतिबन्धनिवृत्तिपर्य्यन्तमावर्त्तनीय इति।

तत्र मोक्षस्वरूपं यावद्विशिष्य न निश्चीयते तावत्तत्र कस्य कामनोदेतु, तत्स्वरूपमात्रनिश्चयात्कामनायां जातायामपि विचारेण साधनविशेषनिश्चये(४) सत्येव तत्र मुमुक्षोः प्रवृत्तिः सम्भवतीति (५)तत्तद्वाद्यभ्युपगतमुक्तितत्साधनाभासनिरासेन परमार्थसती मुक्तिस्तत्साधनञ्च विचार्य्यावधार्यते।

तत्रौपनिषदपक्षव्यतिरिक्तपक्षेषु न मोक्ष(६)तत्साधनेषु कामनोदेतुमर्हति, तत्तद्वाद्यभ्युपगतानां मोक्षप्रकाराणामप्रामाणिकत्वात् प्रमाणविरुद्धत्वाच्च।

---

(१) B omits च। (२) B reads विचार after उपबृंहित। (३) B reads चतुर्लक्षणमीमांसा। (४) B reads जात after निश्चये। (५) B reads तदर्थं before तत्तद्वा। (६) A omits मोक्ष।

तथाहि चार्वाकनये तावन्मोक्षस्वरूपस्यैवानभ्युपगमाद् देह(१)स्येन्द्रियप्राणमनसां च भौतिकत्वेन विनाशित्वाभ्युपगमात् तेषामेव च स्वरूपतो दुःखरूपत्वाद् दुःखहेतुत्वाच्च न तन्निवृत्तिसमये संसारसमये वा दुःखनिवृत्त्यात्मकमोक्षफलभागितावकाशः।

सौ(२)गतमतमप्यपास्तम्। तत्रापि क्ष(३)णिकविज्ञानसन्तानस्य सोपप्लवत्वेन स(४)र्वदा दुःखरूपत्वात्। तन्निवृत्तौ च स्वयमेवाभावात् कस्य मोक्षावकाशः। न चात्मनो नाशः कस्याप्यभिमतो निरुपाधिप्रेमास्पदत्वात्। स्वनाशाद्वरं(५)दुःखितया जीवनम्। यत्तु प्रयागादौ निःश्रेयसकामनया मरणविधानं कुष्ठाद्युपहतानां चान्यत्रापि, तदविनश्वरमो(६)क्षसद्भावमेव गमयतीति न निदर्शनम्। एतेन सर्वज्ञसंतानान्तर्भावपक्षोऽपि निरस्तः, सर्वज्ञस्य सर्वसोपप्लवज्ञानाकारतया संसारिसन्तानापेक्षयाऽपि सोपप्लवाधिक्येनात्यन्तदुःखरूपत्वात्, अन्यस्यान्यान्तर्भावानुपपत्तेश्च। अन्यथा नी(७)लधवलादीनामपि तथा प्रसङ्गात् विश्वाद्वैतवादापत्तेः, संतानस्य सन्तान्यभिन्नत्वेन

(१) A reads देहेन्द्रिय। (२) A reads सौगतमप्य। (३) B reads क्षणिकविज्ञानस्य। (४) A reads सर्वदुःखस्वरूपत्वात्। (५) A reads न्दुःखतया। (६) B. reads मोक्षकृतत्व। (७) A reads नीलधवलाना।

सर्वज्ञसंतानस्यापि विनश्वरत्वाच्च, अविनश्वरत्वे वा स्थैर्यापत्तिरित्युपेक्षणीयाः कुबुद्धयः ।

शून्यवादे तु किं केन काङ्क्ष्येत कामिनः कालत्रयेऽप्यसत्त्वात् ।

आर्हतपक्षेऽपि सततोर्ध्वगमनस्याऽलोकाकाशावस्थानस्य च क्रियात्वेन विनाशित्वान्नापुनरावृत्तिलक्षणमोक्षकामनाविषयता, सुखस्य च मोक्षरूपत्वाभ्युपगमे तस्य जन्यत्वे पूर्वोक्त एव दोषः । अजन्यत्वेऽपि मुक्तसंसारिणोरविशेषात्स एव दोषः । संसारदशायां कर्माष्टकेन तदावृतम्, कर्माष्टकनिवृत्तौ तु निरावरणं सुखमिति चेन्न, कर्मणामनावरणत्वस्य कुत्राप्यदर्शनात् । आत्मस्वरूपत्वतद्भिन्नत्वादिनापि तस्यानुपपत्तिमग्रे वक्ष्यामः । किंचात्मनो देहपरिमाणत्वाभ्युपगमाद्देहानां चाव्यवस्थितप(१)रिमाणवत्त्वात् गजमशकशरीराद्य(२)वयवोपचयापचयाङ्गीकारेणानियतपरिमाणव(३)त्त्वमात्मनो वाच्यम् । तथाच परिमाणभेदे आत्मनो विनाशः प्राप्तः प्रदीपादिवत्, द्रव्यभेदं विना परिमाणभेदानुपपत्तेः । यावत्प्रत्यभिज्ञं वस्तुस्थितेरभ्युपगमेऽपि सावयवत्वेन विनाशित्वध्रौव्यान्नाविनाशिमोक्षफलभागिता, विनाशिनः फलस्य तु (४)स्वर्गादावन्तर्भावेन नात्यन्तपुमर्थमोक्षरूपतेत्यलमतिविस्तरेण ।

(१) B reads परिमाणत्वात् । (२) A inserts अपि between शरीरादौ and अवयव ।

(३) A reads परिमाणत्व । (४) A reads स्वर्गान्तर्भावेन ।

ननु नास्तिकमतेषु माऽस्तु मोक्षकामना फलफलिनोर्विनाशित्वात्। आस्तिकमते तु नास्ति स दोष इति तत्रोपपद्यत एव सा। तथाहि—देहेन्द्रियादिव्यतिरिक्तो नित्यो विभुरात्मेति तावत्सर्वप्रमाणसिद्धम्। तत्र प्रत्यक्षं तावद् योऽहं पितरौ बाल्येऽन्वभूवं सोऽहं वार्द्धके प्रणप्तॄननुभवामीति प्रत्यभिज्ञात्मकमनन्यथासिद्धमबाधितं च बाल्यवार्द्धकयोर्देहभेदेऽप्येकं प्रतिसंधातारं विषयीकुर्वत्तदतिरिक्तमेव स्थायिनमात्मानं विषयीकरोति। तस्य च पूर्वकोटिरहितत्वं, जातस्यास्मिञ्जन्मनि किञ्चिदप्यननुभूतवतः स्तनपानाद्यर्थप्रवृत्त्यन्यथानुपपत्त्या तज्जातीयेष्टसाधनतास्मरणतज्जनकसंस्कारतज्जनकानुभवाश्रयत्वनियमेन ततः पूर्वमपि तथैवाभ्युपगमात्पूर्वानुभवसंस्कारस्म(१)रणेच्छादीनामेकाश्रयाणामेकविषयत्वेन कार्यकारणभावनियमात्। तथाच पार(२)मर्षसूत्रम्—"इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गम्" इति। संघातस्य परार्थत्वाच्च, शय्यासनादेश्चेतनस्य भोग्यस्य भोक्त्रर्थत्वं दृष्टम्। एवं देहस्यापि भोग्यत्वाविशेषाद्भोक्त्रर्थत्वम्। यश्च भोक्ता स स्वयमस्वार्थ एव सिद्ध्यति अन्यथाऽनवस्थानात्। एवं जडवर्गद्रष्टृत्वेनापि तत्सिद्धिः। एवं च सत्यकारणवत्त्वेनोत्तरकोटिरहितत्वमपि तस्य विनाश-

(१) B omits स्मरण। (२) B reads पारमर्ष।

कारणासंभवाच्च, "अविनाशि वा अरेऽयमात्मा" इत्यादिश्रुतिभ्यश्च । एवं प्रत्यक्षानुमानशब्दैरात्मनः नित्यत्वसिद्धे तद्विरोध्यनित्यत्वव्याप्यसावयवत्वमध्यमपरि(१)माणवत्त्वाऽसंभवान्निरवयवत्वे निश्चिते परमाणुः परममहान् वेति विशये सर्वत्र दृष्टकार्यत्वात्परममहानेवेति निश्चीयते, "आकाशवत्सर्वगतश्च नित्यः"इत्यादिश्रुतिभ्यश्च । परमाणुत्वपक्षेऽपि नित्यत्वसंभवादापाततो न मुमुक्षाऽनुपपत्तिः, विचारनिष्कर्षे तु परममहद्ब्रह्माभिन्न(२)स्वरूपमोक्षासिद्ध्या तदनुपपत्तिं वक्ष्यामः ।

तदेवं सर्वास्तिकसाधारण्येन देहेन्द्रियातिरि(३)क्ते भोक्तरि बन्धमोक्षभागिनि नित्ये सिद्धे तस्य बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माऽधर्मभावनाख्यान्नवविशेषगुणान्मनःसंयोगजन्यान्मन्यन्ते वैशेषिक—तार्किक—प्राभाकराः । नवविशेषगुणोदय एव तस्य संसारः युगपत्तन्निवृत्तिश्च मोक्ष इति । तथा च पारम(४)र्षसूत्रम्— "दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तराभावादपवर्गः" इति । तस्मादात्यन्तिकदुःखनिवृत्तेरविनाशित्वात्परमपुमर्थत्वाच्चात्र विवेकिनां कामनोपपद्यत इति ।

मेवम्—स्वाभाविकधर्माणां धर्मिणि स(५)ति

(१) B reads परिमाणत्वा: ।
(२) B reads भिन्नरूप । (३) B reads तिरिक्तः ।
(४) B reads पारमर्ष । (५) B reads सत्युच्छेदासंभवात् ।

समुच्छेदासंभवाद् घटे सति तद्गतयावद्विशेषगुणनिवृत्यदर्शनात् । तथाचोक्तं वार्त्तिके—"आत्मा कर्त्रादिरूपश्चेन्मा काङ्क्षीस्त(१)र्हि मुक्तताम् । न हि स्वभावो भावानां व्यावर्त्तेतौष्ण्यवद्रवेः" इति । तथा च धर्मिणा सहैव तेषां निवृत्तिरङ्गीकरणीयेति पूर्वोक्तनैरात्म्यवादप्रसङ्गः । तदुक्तं ब्रह्मसिद्धिकारैः—"विज्ञानादिविशेषगुणनिवृत्तिलक्षणा च मुक्तिरुच्छेदपक्षान्न भिद्यते। न हि सतोऽप्यात्यन्तिको दर्शनाभावोऽभावाद्विशिष्यते, कश्च सर्वतः प्रेयस आत्मनोऽभावमभिकाङ्क्षेदित्यपुरुषार्थो मोक्षः स्याद्" इति। सर्वविशेषगुणनिवृत्तिविशिष्टे चात्मनि प्रमाणाभावात्, अज्ञायमानस्य दुःखाभावस्यापुमर्थत्वाच्चान्धकारप्रनृत्तवदसल्लक्ष(२)णत्वव्याप्तिः । अज्ञायमानस्यापि स्वरूपेण पुमर्थत्वमित्यपि न, मानाभावेन तत्स्वरूपस्यैवाऽसिद्धेरुक्तत्वात्, तत्प्रमाणत्वाभिमतानामनुमानानामाभासत्वात् । "अशरीरं वाव सन्तं न (३)प्रियाप्रिये

(१) B reads स्तर्हि मुक्तताम् ।

(२) B reads ल्लक्षणत्वप्राप्तिः ।

(३) A reads प्रियाप्रिये न ।

स्पृशतः” इति श्रुतिरेव तत्र मानमिति चेन्न । जीवतोऽपि देहाभिमानरहितस्य सुखदुःखसम्बन्धाभावप्रतिपादनपरत्वात्तस्याः, नवविशेषगुणरहितावस्थाविशेषप्रमापकत्वाभावात्तत्प्रतिपादकपदाभावाच्च । किंच, दुःखध्वंसस्य न पुरुषार्थत्वम्, पुनर्दुःखान्तरोत्पादसम्भवात्, इदानीन्तनदुःखध्वंसवत् ।

अथ दुःखप्रागभावस्य दुःखकारणत्वात्तन्निवृत्तौ दुःखान्तरानुत्पाद इति मतम्, तन्न । कियतां प्रागभावानां निवृत्तावप्यन्येषां सद्भावसम्भवात्सर्वेषामेकदा निवृत्तौ मानाभावात्, प्रागभावनिवृत्तेः पुरुषव्यापारासाध्यतया तदर्थं पञ्चाध्यायीप्रभृतिशास्त्राभ्यासश्रवणमननिदिध्यासनादिप्रयासानां निष्फलत्वापत्तेः, दुःखोत्पत्त्यर्थमेव प्रवृत्तिप्रसङ्गाच्च । परमपुमर्थभूतसर्वप्रकारसुखनिवृत्तित्वेन द्वेषस्यैवात्रोचितत्वात्, को हि सर्वप्रकारसुखपरिहारेण शुष्ककाष्ठवदवस्थातुमिच्छेत् ।

यत्तु न्यायभाष्यकृतोक्तं “शान्तः खल्वयं सर्वविप्रयोगः सर्वोपरमोऽपवर्गः, बह्वत्र कृच्छ्रं घोरं पापकं लुप्यत इति, कश्चिद् बुद्धिमान् सर्वदुःखोच्छेदं सर्वदुःखासंविदमपवर्गं न रोचयेदिति । तद्यथा मधुविषसंपृक्तान्नमनादेयमिति,

एवं सुखं दुःखानुषक्तमनादेयम्" इति।
तन्न—दुःखाभावस्यापि सुखशेषत्वेन पुरुषार्थत्वा-त्स्वतन्त्रपुरुषार्थद्वयकल्पने मानाभावात्सुखकाले दुः-खाभावस्य नियतत्वाद् दुःखाभावकाले च सुषु-प्तिप्रलयादौ सुखस्याप्यभावान्न सुखस्य दुःखाभा-वार्थत्वेन (१)पुमर्थत्वसम्भावना, व्यभिचारात्। अधिकसुखेच्छया त्वल्पसुखोपेक्षा युज्यते, न तु केव-लदुःखाभावायेति प्रेक्षापूर्वकारिणां पन्थाः।

अस्तु तर्हि नित्यसुखाभि(२)व्यक्तिर्मुक्तिरिति भट्टाचार्यमतम्, तत्र पूर्वोक्तदूषणासम्भवात्। न, विकल्पासहत्वात्, तन्नि(३)त्यं सुखमात्मनो भिन्नमभि-न्नं वा। आद्येऽपि जन्यमजन्यं वा। तत्राद्ये जन्यस्य क्षयित्वनियमेन कथमक्षयपुमर्थकामनाविषयता, ब्रह्म-लोकान्तसुखवितृष्णो हि मुमुक्षुरुच्यते, तद्वैतृष्ण्यं च जन्यत्वेन क्षयित्वादेव। अन्त्येऽपि पक्षे तस्य ज्ञापकं वाच्यम्, स्वप्रकाशत्वासम्भवादनभ्युपगमाच्च। मोक्षे च ज्ञानकरणमनःसंयोगाद्यभावादसंवेद्यत्वेन तदेवा-पुमर्थत्वमायातम्। न ह्यसंवेद्यसुखस्य पुमर्थत्वमस्ति, परसुखस्यापि तत्प्रसङ्गात्। इन्द्रियाद्यभ्युपगमे च संसारावस्थातो न विशेषः, संसारावस्थायां च तस्य

(१) A reads पुमर्थसम्भावना। (२) A reads भिव्यक्तिरिति। (३) B reads नित्यसुख।

(४) B omits तत्।

भाने हेतुर्वाच्यः । कस्यचिदावरणस्याभ्युपगमे च तस्य सत्त्वासत्त्वभिन्नत्वादिरूपेण विचारासहत्वादनिर्वचनीयमायाभ्युपगमत्वप्रसङ्गः, तथा च सर्वं ब्रह्मवादिमतमङ्गीकृतं स्यात् । अत एवात्माभिन्नं तत्सुखमिति मतं परास्तम्, आत्मरूपस्य सर्वदाऽनावृतत्वेन तदभिन्नसुखस्य संसारावस्थायामपि भानप्रसङ्गात् । अनया चानुपपत्त्या नव्यमीमांसकैः केवलदुःखाभाव एव परिगृहीतः । स च निराकृत एव, आत्मनिवृत्तिमन्तरेण तदाश्रितदुःखनिवृत्त्ययोगात् । भाट्टैः कार्यकारणयोस्तादात्म्याभ्युपगमात्समवायिकारणनिवृत्त्यैव लोके कार्यनिवृत्तिदर्शनाच्च ।

अस्तु तर्हि सांख्ययोगमतम् । तत्र ह्यसङ्गस्यात्मनो निर्विशेषत्वाद् दुःखस्य बुद्धिधर्मत्वाभ्युपगमाद् दुःखसमवायिकारणध्वंसहेतुकदुःखनिवृत्त्यभ्युपगमेऽपि नात्मन उच्छेदसम्भावना । स्वप्रकाशत्वाच्च नान्धकारप्रनृत्ततुल्यता । न, अस्मिन्नपि पक्षे सतो दुःखस्य निरोधासम्भवात् असतो निरोधस्य चोत्पत्त्यसम्भवात् "नासतो विद्यते भावो नाभावो विद्यते सतः" इति स्मृतेः । संसारान्मोक्षस्याणुमात्रेणापि विशेषानुपपत्तेरपुरुषार्थत्वं तुल्यमेव । वरं वैशेषिकादि-

मतेऽसतोऽपि दुःखस्य निरोधः सम्भवत्यसतश्च निरोधस्योत्पत्तिः संभवति। तदपेक्षयापि तुच्छ एवार्थ सत्का(१)र्यवादपक्षः। सत्त्वेऽप्याविर्भावतिरोभावौ संभवत इति चेन्न, तयोरपि सत्त्वाविशेषात्। तत्राप्यन्यकल्पनेऽनवस्था मूलक्षतिकरी। तयोः सदसद्विलक्षणत्वाङ्गीकारे चा(२)ऽनिर्वचनीयत्वाभ्युपगमाद् ब्रह्मवादिमतापत्तिः। तस्मादस्मिन्पक्षे नितरां नोपपद्यते मोक्षः।

सर्वस्मिंश्च मते मोक्षस्यागन्तुकत्वाभ्युपगमे भावत्वेऽभावत्वे वा जन्यत्वेनाऽवश्यं विनाशित्वम्, जन्यत्वमात्रस्यैव लाघवेन विना(१)शित्वप्रयोजकत्वात्। प्रतियोगिनिष्ठस्य कस्यचिदतिशयस्य भावरूपस्यैव विनाशिनो ध्वंसत्वाभ्युपगमादधिकरणातिरिक्ताभावानभ्युपगमाद्वा न ध्वंसे व्यभिचारः। घटो ध्वस्त इति प्रतीतेर्ध्वंसाश्रयत्वेन वा तत्प्रतियोगित्वाश्रयत्वेन वा घटविषयीकरणात्वात्तस्मिन्काले घटासत्त्वे च निराश्रयधर्मप्रतीत्ययोगात्। घटस्य ध्वंस इति षष्ठ्यर्थसंबन्धस्य राहोः शिर इतिवदिष्टत्वान्न तार्किकाभ्युपगता निष्प्रतियोगिकध्वंससिद्धिः। घटस्य

(१) A omits. वाद।

(२) B reads त्वानङ्गीतत्रे च, but it is wrong.

ध्वंसकालेऽपि सत्त्वे पूर्ववत् प्रत्यक्षत्वं स्यादिति चेन्न, प्रत्यक्षत्वमन्तरेणापि कुड्यादिव्यवहितस्य सत्ताऽङ्गीकारात्, प्रत्यक्षत्वाव्याप्येन सत्त्वेन तदापादनायोगात् व्यवधानानां च फलैकोन्नेयत्वात् कुड्यादिविलक्षणव्यवधानं ध्वंसान्यथानुपपत्तिरेव गमयतीति न दोषः। न चैवं सति सत्कार्य्यवादोक्तदोषापत्तिः, सदसद्विलक्षणत्वाभ्युपगमेनोभयपक्षोक्तदोषपरिहारात्। विस्तरेण चैतदुपपा(१)दयिष्यामः।

तथा चात्मनो दुःखाभावो नाम कश्चिदतिशयो गुणाधानलक्षणो मलक्षालनलक्षणो वा वक्तव्यः। उभयथापि तस्य ध्रुवमनित्यत्वम्, उत्पत्त्याप्तिविकृतिसंस्कृतिलक्षणानां चतुर्णामपि क्रियाफलानां विनाशित्वनियमात्, मोक्षस्य सर्ववादिभिरविनाशित्वाभ्युपगमात्। तदुक्तं वार्त्तिककारैः "उत्पत्तिराप्तिर्विकृतिः संस्कृतिश्च क्रियाफलम्। मुक्तिर्विलक्षणैतेभ्यस्तेनेहानर्थको विधिः" इति। भाष्यकारैश्च महता प्रबन्धेन प्रतिपादितमेतत्समन्वयाधिकरणे।

अतएवैकदेशिमतानामप्यनवकाशः, भेदाभेदपक्षस्य सर्वप्रमाणविरुद्धत्वात्, पारमार्थिकभेदस्य निवृत्त्ययोगाच्च। किं वा तस्य निवर्त्तकम्? तत्त्वज्ञान-

(१) B inserts उपरिष्टाद् between एतद् and उपपादयिष्यामः।

मिति चेत्, तत् किं भिन्नाभिन्नविषयम् अभिन्नमात्र-विषयं वा। आद्ये न तस्य भेदनिवर्तकत्वं सम्भवति, ज्ञानस्य स्वविषयनिवर्तकत्वायोगात्। द्वितीये भेदस्य ज्ञाननिवर्त्यत्वेन कल्पितत्वप्रसङ्गः, कल्पितस्यैव ज्ञाननिवर्त्यत्वनियमात्। पुरुषोत्तमदर्शनादिना पापादिनिवृत्तौ व्यभिचार इति चेन्न, तत्र विहितक्रियाविशेषत्वेनैव पापादिनिवर्तकत्वात्। इह च ज्ञानत्वस्य निव(१)र्तकत्वावच्छेदकत्वेनैव विवक्षितत्वात्स्वप्नगन्धर्वनगरशुक्तिरजतादौ तथा दर्शनात्। तदुक्तं पञ्चपादिकाकृद्भिः, "यतो ज्ञानमज्ञानस्यैव निवर्त्तकम्" इति। अज्ञानस्य च विश्वभ्रमोपादानत्वेनाद्वितीयचैतन्ये कल्पितत्वं वक्ष्यामः। अभिन्नमात्रस्य वेदप्रमेयत्वे भेदांशस्य कथं शास्त्रीयत्वम्, भिन्नाभिन्नस्य वेदप्रमेयत्वे मोक्षदशायामपि तथैव स्यादभिन्नमात्रे प्रमाणाभावादित्यलं मृतमारणेन।

ज्ञानान्मिथ्याज्ञाननिवृत्तिः कर्मणा भेदनिवृत्तिरित्यपि तुच्छम्, भेदाभेदवादिमते मिथ्याज्ञानत्व(२)स्य दुर्निरूपत्वात्। भेदाभेदेन सर्वत्रैव सर्व(३) प्रमासम्भवात्। कर्मणाञ्च न कुत्रापि भेदनिवर्तकत्वं दृष्टं न वा श्रुतम्। कर्मजन्य(४)स्य चानित्यत्वमवोचाम। "न स पुनरावर्तते" इति श्रुत्या पुनरा-

---

(१) B reads स्वनिवर्तकत्वावच्छेदकत्वेन।

(२) B omits त्व। (३) B omits सर्व।

(४) B reads न्यानित्यत्वमेवावोचाम।

वृत्यनुमानं बाध्यत इति चेन्न, विरोधाभावात् । न हि यदा ब्रह्मलोकं प्राप्नोति तदैव पुनरावर्तत इति वयं ब्रूमः । श्रुतिश्च "नावर्त्तते" इति वर्तमानकालेनाऽनावृत्तिं दर्शयति । नावर्तिष्यत इति तु कल्पना कृतक(१)त्वेन विनाशित्वानुमानविरुद्धेति ब्रूमः । उपासनाविधेः स्तुतिपरत्वाच्च नास्य प्रमाणान्तरबाधकत्वम्, श्रुतिश्च "तद्यथेह कर्मजितो लोकः क्षीयत एवमेवामुत्र पुण्यजितो लोकः क्षीयते" इति । केवलकर्मजन्यत्वाच्च ज्ञानकर्मजन्यत्वे कोऽपि न विशेषः । अशनायाद्यतीतात्मज्ञानस्य सर्वकर्मविरोधित्वाच्च न समुच्चयावकाशः । निर्विकारावस्थब्रह्मप्राप्त्यादिकञ्च सर्वमनुपपन्नम् । प्रमाणशून्यत्वादद्वैतश्रुतिविरोधादुक्तदूषणगणग्रासाच्चेत्यास्तां तावत् ।

सौगताद्युक्तसाधना(२)भासानां चाप्रामाणिकत्वेनैव न मोक्षसाधनत्वसम्भावनापि । तथा हि स्वलक्षणभावना क्षणिकभावना दुःखभावना शून्यभावना चेति भावनाचतुष्टयं मोक्षहेतुरित्यत्र न किञ्चिद(३)पि मानमस्ति, "तमेव विदित्वाऽतिमृत्युमेति" इत्याद्यागमविरो-

(१) A reads कृतत्वेन ।

(२) A omits साधन ।

(३) B reads किञ्चिदप्यत्र ।

धश्च । सौगतागमस्य च(१)पौरुषेयस्य मूलप्रमाणशू-न्यत्वेनाप्रमाणत्वात् नामजात्यादियोजनारहितेषु स्थिरेषु(२)सुखसाधनेषु सदात्मकेषु स्वलक्षणादिभा-वनानां विभ्रममात्रत्वाच्च । यथा चैतत्तथा वक्ष्यामः ।

अतएवार्हतशास्त्रस्याप्रमाणत्वात्तदुक्तसा(३ध-नाऽनादेयत्वमेव ।

एवं षट्पदार्थज्ञानस्य षोडशपदार्थज्ञानस्य वा हेतुत्वे न किञ्चिन्मानमस्ति, अलौकिकफलसाधनताया आगमैकवेद्यत्वात् । न च काणादादिमहर्षिवाक्य-मेव मन्वादिवाक्यवदत्र प्रमाणमिति वाच्यम् । युक्ति-शास्त्रत्वेनागमविधया प्रामाण्याभावात् । अन्यथा प्रतिज्ञामात्रेणैव वस्तुसिद्धेरुद्देशलक्षणपरीक्षादि-प्रयासो न स्यात् । "य एतद्विदुरमृतास्ते भवन्त्य-थेतरे दुःखमेवापियन्ति" "मृत्योः स मृत्यु-माप्नोति य इह नानेव पश्यति"इत्यादिश्रुतिबा-धितत्वाच्च । कीदृशं च प(४)दार्थतत्त्वज्ञानं मोक्षहेतुः सामान्याकारेण (५)वा विशेषाकारेण वा । आद्ये प्रमेयत्वादिरूपेण सर्वेषामस्त्येव तज्ज्ञानम् । द्वितीये तु सर्वेषां पदार्थानां तेन रूपेण ज्ञानं ब्रह्मणोऽप्यशक्य-

(१) B inserts मतस्य between सौगत and च ।
(२) B reads first सुखसाधनेषु स्थिरेषु and omits सदात्म-केषु । (३) B reads साधनानामसा । (४) B reads त-त्त्वज्ञानं । (५) B omits वा ।

मनन्तत्वात् । द्रव्यत्वादिना ज्ञानं कारणमिति चेत् तर्हि तद्विभागवचनादेव तल्लाभात् । पृथिवीत्वादिरूपेण तद्व्युत्पादनं व्यर्थम् । यथा चाप्रामाणिकत्वमनयोः पक्षयोस्तथा विक्षिप्य वक्ष्यामः ।

ऐकभविकपक्षनिराकरणं निराकर्तुमुपक्रमापादयति । केवलं निर्युक्तिकत्वादित्युपे(१)क्ष्यते ।

एवं प्रकृतिपुरुषविवेकेऽपि विकल्पनीयम् । तत्रापि सामान्याकारज्ञानस्यातिसुलभत्वात् । विशेषाकारेण चाशक्यत्वात्तुल्यैवानुपपत्तिः । आत्ममात्रज्ञानं कारणमिति चेत्, तत्र तार्किकादिपक्षेऽहं जानामीत्यात्मज्ञानं वर्तत एव सार्वजनीनम् । न चास्य परोक्षत्वं भ्रान्तित्वं वा शक्यं वक्तुम् । एतस्याऽपरोक्षप्रमात्वेऽपि मिथ्याज्ञानवासनावशीकृतत्वान्न मिथ्याज्ञाननिवर्तकता, किन्तु पदार्थतत्त्वविवेकोत्तरकालीनश्रवणादिपरिपाकजनितज्ञानान्तरस्यैव सवासनमिथ्याज्ञाननिवर्तकत्वमिति चेत्, न । आत्मापरोक्षप्रमात्वेन वासनानिवर्तकत्वाभावस्तत्रापि समानस्तन्निष्ठवैजात्ये च न किञ्चिन्मानं पश्यामः । प्राभाकराणां तु भ्रान्तित्वानभ्युपगमात्तत्त्वज्ञानस्य क्वोपयोगः । "क्षीयन्ते चास्य कर्मा(२)णि" इतिश्रुतेः

(१) B reads पेक्षते । (२) B reads तस्मिन् दृष्ट इति after कर्माणि ।

कर्मक्षय एव ज्ञानेन क्रियत इति चेत् तर्हि आत्मत-त्त्वज्ञानस्य सर्वदा विद्यमानत्वात्कुतो न कर्मक्षयः। त्वया तु गुणगतजातेरनङ्गीकाराद्वैजात्यं शङ्कितुमपि न शक्यत इत्यधिकम् । ब्रह्मचर्यादिशमदमाद्यङ्गोपबृं-हितमपुनरावृत्तिफलकं विहितं ज्ञानं तन्निवर्तकमिति चेत्, ज्ञानस्य कर्तुमकर्तुमन्यथा कर्तुमशक्यत्वेन विधे-यत्वानुपपत्तेः । कीदृशं च ज्ञानं विधीयते—ज्ञानादि-विशिष्टात्मविषयं वा केवलात्मविषयं वा ? आद्ये सांसारिकज्ञानान्न कोऽपि विशेषः । द्वितीये तु मोक्ष-साधनतत्त्वज्ञानविष(१)यं स्वरूपमेवात्मनो वास्तवम्, शा(२)स्त्रीयत्वात् ज्ञानात्मत्वादित्यायातं ब्रह्मवादि-मतम् । अशनायाद्यतीतात्मज्ञानस्याभ्रान्तित्वेन मो(३)क्षहेतुत्वयोगात् । प्रत्यक्षादीनां चान्यथोपपत्तिं वक्ष्यामः । उदाहृतश्रुतेश्च कर्मकारणीभूतमिथ्याज्ञा-नस्य तत्त्वज्ञाननिवर्त्यत्वात् तद्द्वारा कर्मक्षयप्रतिपादने तात्पर्यं न तु साक्षात् विरोधाभावादि(४)त्येवावधेयम् ।

सांख्यादिमतेऽपि आत्मनो नित्यानुमेयत्वात्तत्सा-क्षात्कारो न संभवत्येव । परोक्षज्ञानं त्वद्याप्यस्तीति न तत्साधनम् । परोक्ष(५)स्वभावस्याप्यात्मनो योगज-धर्मप्रभावात्साक्षात्कार इत्यपि न, योगजधर्मस्य

(१) B omits अनुस्वार । (२) B reads शास्त्री-यत्वाज्ज्ञानमत्वत्यायातं But ज्ञानमत्वादी stands for ज्ञा-नवत्वादी । (३) B reads मोक्षे । (४) B reads दित्यवधयेम् । (५) B reads परोक्षत्वभावस्या ।

पदार्थसामर्थ्यानुसारेणैवातिशयहेतुत्वात् । तदाहुर्भट्टाचार्याः—"यत्राप्यतिशयो दृष्टः स स्वार्थानतिलङ्घनात् । दूरसूक्ष्मादिदृष्टौ स्यान्न रूपे श्रोत्रवृत्तिता" इति । हेयोपादेयशून्यत्वाच्च तस्य वैय(१)र्थ्यमवोचाम ।

आस्तां तावदितः परं कृतधियामद्वैतनिष्ठावतां
तत्तद्वादिविभीषिकानिरसनैः किं कर्णकोलाहलैः ।
यत्तु प्रस्तुतमद्वितीयपरमानन्दैकज्ञानात्मकं
वस्तु प्रत्यगभिन्नमेतदधुना निर्णीयते न्यायतः ॥

नन्वौपनिषदपक्षेऽप्यनुपपत्तिः समाना । तथाहि-अज्ञाते कामनानुदयाज्ज्ञाते तत्र कामना वाच्या । तथा च कथमहेयानु(२)पादेये नित्यसिद्ध आत्मनि सा भवतु, सिद्धे इच्छाविरहात् संसारावस्थायामपि मोक्षापत्तेश्च । तदुक्तम् "किं च मानादविज्ञाता विमुक्तिः काम्यते न वा । ज्ञातायां त्वात्मनित्यत्वान्नितरां नास्ति कामना" इति । न च संसारावस्थायामविद्याऽऽवृतत्वाद्विद्यमानोऽप्यद्वयानन्दो न भासते विद्यया त्वविद्यायां निवृत्तायां स्वप्रकाशत्वादानन्दरूपेण स्वयमेव प्रथते इत्यविद्यानिवृत्तिविशिष्टत्वेन

---

(१) B reads वैयर्थ्यमेवावोचाम । (२) B reads नुपादेयनित्यसिद्ध आत्मनि ।

कामनेति वाच्यम् । अविद्यानिवृत्तेर्दुर्निरूपत्वात् साऽविद्या आत्मभिन्ना तत्स्वरूपा वा ? आद्ये द्वैतापत्तिरद्विती(१)यश्रुतिव्याकोपश्च, द्वितीये पूर्वोक्तदोष इति ।

अत्रोच्यते । नासिद्धत्वमात्रेणात्मनीच्छाविरहः, सिद्धत्वं किं सत्त्वं वा, ज्ञायमानत्वं वा, अप्रतिरुद्धसाक्षात्कारविषयत्वं वा? नाद्यः, विस्मृतग्रैवेयकप्राप्तौ रज्जुभु(२)जङ्गमनिवृत्तौ (३)च व्यभिचारात् । अत एव न द्वितीयोऽपि तस्येच्छाप्रयोजकत्वात् । तृतीयस्तु भवतीच्छापरिपन्थी । स तु प्रकृते नास्ति, असंभावनादिप्रतिबन्धात् । अत एव पित्तदूषितरसनस्य सितामश्नतो मधुरत्वेन तां जानतोऽपि न माधुर्यनिमित्ततृप्तिविशेषोत्पत्तिः, पित्तदोषेण माधुर्यसाक्षात्काराभावात् । तथा च द्विविधमिष्टम्,—वस्तुतोऽप्राप्तं ग्रामादि, प्राप्तमपि भ्रमव्यवहितं कण्ठचामीकरादि । एवं परिहार्यमपि द्विविधम्,—वस्तुतोऽपरितं गतीदि, सर्वदा परिहृतं रज्जुभुजङ्गादि भ्रममात्रादपरिहृतमिव । तत्राद्ययोः क्रियाव्यवधानौ प्राप्तिपरिहारौ । द्वितीययोस्तु साक्षात्कारमात्रसाध्यौ । अत्रै(४)व परमपुमर्थत्वं मन्यते क्रियाव्यवधा-

---

(१) B reads अद्वैत for अद्वितीय । (२) B reads भुजङ्ग । (३) B omits च । (४) B reads अत्रैव च परमपुमर्थं मन्यन्ते । (५) B reads रज्जुसर्पादि ।

नाभावात् । तथा च परमानन्दप्राप्त्यविद्यानिवृत्त्यो-रपि अव्यवहितत्वादसिद्धत्वप्रत्ययेन कामना-विषयत्वमुपपद्यत एव । तदुक्तं वार्तिके, "न युक्तं कामना मुक्तौ पुंसां नास्तीति भाषितुम्। देश-कालावच्छिन्नसुखाद्यर्थित्वदर्शनात् ॥" इति । आत्मत्वेन सिद्धत्वेऽपि निरतिशयसुखत्वेनाऽसिद्ध-त्वात्तेन रूपेण कामनोपपद्यत इत्यर्थः । अन्यच्च—

"ग्रामादि किञ्चिदप्राप्तं प्राप्तुमिष्टमिहेच्छति।
हेमादिविस्मृतं किञ्चित्करस्थमपि लिप्सते ॥
परिहार्यं तथाऽनिष्टं कण्टकादि जिहासति ।
रज्ज्वां सर्पादि किञ्चिच्च त्यक्तमेव जिहासति ॥
नियतोपायसाध्यत्वाद्वाप्यपरिहार्ययोः ।
विधितः प्रतिषेधाच्च साधनापेक्षिता भवेत् ॥
अज्ञानान्तरितत्वेन संप्राप्तत्यक्तयोः पुनः ।
याथात्म्यज्ञानतो नान्यत्पुरुषार्थाय कल्पते॥" इति।

यत्तु अविद्यानिवृत्तेर्दुर्निरूपत्वमुक्तम्, तन्न । पञ्च-मप्रकारत्वाभ्युपगमात् । यथा हि सत्त्वमसत्त्वं सदसत्त्वं वाऽवि(१)द्यातत्कार्ययोर्न सम्भवतीति चतुर्थी कोटिर-निर्वचनीयत्वमेवाश्रिता तथाऽनिर्वचनीयस्याऽविद्याता-दात्म्यनियमान्निवृत्तितत्प्रतियोगिनोश्च तादात्म्या-

(१) B reads अविद्याकार्ययो ।

योगादनिर्वचनीयविलक्षणत्वमपि अविद्यानिवृत्तेः सिद्ध्यति, अन्यथाऽनुपपत्तेः सर्वतो बलवत्त्वात् । अद्वैतश्रुतेश्च सदद्वैतमात्रविषयत्वान्न विरोधः । एवं सत्यस्थूलादिवाक्यमप्यनुगृहीतं भवति, स्थूलत्वाद्यभावानामात्मनि प्रमेयत्वात्, अद्वितीयशब्देनापि द्वितीयाभावबोधनाच्च । अन्यथा केवलात्मबोधने सजातीयविजातीयभेदाभावाप्रतीतौ किमद्वैतश्रुत्या विरुध्येत । तस्मादभावाभ्युपगमोऽद्वि(१)तीयत्वबाधक एवेति न काप्यनुपपत्तिरितीष्टसिद्धिकारादयः ।

वस्तुतस्तु अभावस्य चैतन्यात्मकत्वात्स्वप्रकाशचैतन्यसंबन्धेनैव भानमभ्युपेयम्, कूटस्थाऽसङ्गस्वभावस्य वास्तवसम्बन्धायोगात् कालपनिकत्वे ऽश्यं वाच्ये सर्वस्या अपि कल्पनाया अविद्यामूलत्वादभावकल्पनाप्यविद्यामूलेति नाऽनिर्वचनीयवैलक्षण्यम् । तदुक्तं वार्त्तिककृद्भिः,—"नान्यदज्ञानतोऽस्तित्वं द्वितीयस्यात्मनो यथा । निवृत्ति(२)स्तावदेवास्य नावगत्यात्मनोऽपरा" इति ॥ अस्थूलादिवाक्यानां च स्थूलादिविलक्षणात्मस्वरूपमात्रबोधकत्वम्, न(३) तदभावबोधकत्वम्, कल्पितपदार्थभावाभावयोरधि-

(१) A reads ऽद्वितीयबाधक ।

(२) A reads तावद् ।

(३) A omits न तदभावबोधकत्वम् ।

ज्ञानस्वरूपमात्रत्वात् । यथाऽज्ञातं शुक्तिद्रव्यमेव र-जतभावात्मकं तदेव ज्ञातं रजताभावात्मकम्, तद-साधारणस्वरूपस्यैव र(१)जताभावात्मकत्वात् । एवमत्राप्यज्ञात आत्मा सर्वद्वैतभावात्मकः, ज्ञातश्च तदभावात्मकः, त(२)दसाधारणस्वरूपस्यैव द्वैता-भावरूपत्वात् । तदुक्तम्, "स्थूलापह्नुतिरत्र स्या-द्धि वस्तु यत्पारमार्थिकम् । नाभावनिष्ठोऽन्य-त्रापि निषेधः किमुताक्षरे ॥ अक्षरं येन रूपेण स्थूलं वस्तु निषेधति । तेनैवात्रापि निःशेषं तस्य स(३)र्वविरोधतः ॥ अन्ये(४)नानान्येन रूपेण रुद्धो हन्ति न पावकः । विरोधिना यथा तद्वन्मेह स्थूलाद्यपक्रिया ॥ मानित्वादिनिषेधः स्याद्यथैवाक्रियरूपतः । प्रत्यक्कूटस्थरूपेण तथा स(५)र्वनिषेधतः ॥ कूटस्थबोधपूर्णत्वं

---

(१) A reads रजताभावत्वात् ।

(२) B reads तस्मात् in the place of तद् ।

(३) B reads सर्वनिषेधतः ।

(४) A reads अन्येनान्यरूपेण रुद्धोहन्ति न पावकः ।

(५) B reads सर्वनिषेधकृत् ।

प्रत्यक्षं वस्तुन: खल: । एतदस्य विरोधित्वं कार्यकारणवस्तुभि:" ॥ इति । भूतलादिस्वरूपस्यैवाभावव्यवहारहेतुत्वं प्राभाकरैरङ्गीक्रियते । तार्किकैरपि घ(१)टाभावो घटो न भवतीत्यादावभावप्रतियो(२)गिकाभावान्तरानभ्युपगमात् तत्स्वरूपस्यैवाभावबुद्धिहेतुत्वमङ्गीकृतं, त(३)द्वदस्माकं किं न स्यात्, एतदेवाभिप्रेत्योक्तं "नाभावनिष्ठोऽन्यत्रापि निषेध:" इति । तस्मादखण्डानन्दाद्वितीयचैतन्यसन्मात्र आत्मा ज्ञात: सन्नविद्यानिवृत्तिरित्युच्यते । अत्रैव च सर्वपुमर्थविश्रान्ति: "कृतं कृत्यं प्राप्तं प्रापणीयम् आत्मलाभान्न परं विद्यते" इति स्मृते: ।

ननु ज्ञात आत्मेत्यत्र ज्ञानस्य विशेषणत्वे ज्ञानविशिष्टस्यैव मोक्षत्वाद्विशेषणनाशे तदभावप्रसङ्गस्तेनोपलक्षणत्वमेव तस्य वक्तव्यम् । तथा च ततः प्राक्कालेऽपि मोक्षव्यवहारापत्तिरिति । मैवम्, काकवन्तो देवदत्तस्य गृहा इत्यादावपि काकसंबन्धात्प्रागऽपि देवदत्तस्य गृहत्वादिव्यवहारापत्तेस्तुल्य-

---

(१) A reads घटाभावे घटो न भवतीत्यादा ।

(२) B reads प्रतियोग्यभावा । (३) A reads तत्त्वस्माकं ।

त्वात् । उपलक्षणस्यापि स्वो(१)त्तरकाल एव व्यावर्तकत्वमिति चेदिहापि तुल्यम् । न हि दृष्टेऽनुपपन्नं नाम । अविद्यायाश्चाऽनादित्वात्प्रागभावनिवृत्तिरूपघटनिवृत्तावपि प्रागभावानुत्पत्तिवन्न तत्त्वज्ञाननिवृत्तावपि पुनरुत्पत्तिप्रसङ्गः ।

कीदृशं पुनर्ज्ञानमज्ञाननिवर्तकम(२)भ्युपेयते । न केव(३)लचैतन्यं तस्य सर्वदा सत्त्वेनाविद्याया नित्यनिवृत्तिप्रसङ्गात् । ततश्च तन्मूलकसंसारोपलब्ध्यनुपपत्तेः सर्वशास्त्राऽनारम्भप्रसङ्गोऽनुभवविरोधश्च । नापि वृत्तिरूपम्, तस्य सत्यत्वे तत्कारणान्तःकरणाविद्यादेरपि सत्यत्वस्यावश्यकत्वान्न तेन तन्निवृत्तिः सर्ववेदान्तार्थविप्लवापत्तिश्च, मिथ्यात्वे कथमज्ञाननिवर्तकता । न हि मिथ्याज्ञानमज्ञाननिवर्तकं दृष्टम्, स्वप्नज्ञानस्यापि तत्प्रसङ्गात् । सत्यस्यै(४)व रज्ज्वादिज्ञानस्य भुजङ्गादिभ्रमोपादानाऽज्ञाननिवर्तकत्वमुपलब्धम् । किं च तत्सप्रकारं नि(५)ष्प्रकारं वा । आद्ये निष्प्रकारे ब्रह्मणि सप्रकारज्ञानस्यायथार्थत्वान्नाज्ञाननिवर्तकता, तस्य यथार्थत्वे वा नाद्वै-

---

(१) B reads स्वोत्तरकालव्यवहर्तकस्व, but this seems to be a mistake of the copyist. (२) B reads मभ्युपगम्यते । (३) B reads केवलं । (४) B reads सत्यस्यैव हि । (५) B reads निष्प्रकारकं ।

तत्सिद्धिः । न द्वितीयः कुत्रापि निष्प्र(१)कारकज्ञानस्याऽज्ञाननिवर्तकत्वादर्शनात्, समानाश्रयसमानप्रकारसमानविषयज्ञानस्यैव तथात्वदर्शनात् । अन्यथा प्रमेयं द्रव्यमिति ज्ञानादपि घटाद्याकाराज्ञाननिवृत्तिप्रसङ्गः । समानविषयत्वस्य घटत्वप्रकारकज्ञानादिना तुल्यत्वात् । किं च तत्परोक्षमपरोक्षं वा, आद्ये न तस्यापरोक्षाध्यासोपादानाऽज्ञाननिवर्तकता, श्वैत्यानुमानादिनापि शङ्खपीतत्वभ्रमनिवृत्तिप्रसङ्गात्, अपरोक्षाध्यासस्याऽपरोक्षप्रमानिवर्त्यत्वात् । न द्वितीयः, शब्दस्याऽपरोक्षज्ञानजनकत्वाऽदर्शनात्, ज्ञानकरणत्वावच्छेदेन परोक्षज्ञानजनकत्वनियमात् । दशमस्त्वमसीत्यादावपि शब्देन परो(२)क्षे ज्ञाने जनिते पश्चान्मानसापरोक्षज्ञानं ज(३)न्यते । अन्यथा करणस्वभावभङ्गप्रसङ्गः । न चात्रापि तथाऽस्त्विति वाच्यम्, औपनिषदसमाख्याविरोधात्, "नावेदविन्मनुते तं बृहन्तम्" इत्यादिश्रुत्या वेदान्तातिरिक्तकरणनिषेधाच्च, अपरोक्षवस्तुनि परोक्षज्ञानं जनयतः शब्दस्य प्रामाण्याऽयोगाच्च ।

"यद्यपि सत्यं ज्ञानमनन्तम्" इत्यादिवाक्य-

---

(१) B reads निष्प्रकारकस्य । (२) B reads परोक्ष । (३) A omits जन्यते ।

जनितं स्वरूपतः परोक्षमपि ज्ञानं परोक्षत्वाऽग्राहकत्वान्न भ्रमत्वमर्हति, व्यधिकरणप्रकार(१)कत्वाभावात्, तथापि स्वसिद्धान्ते प्रमात्रभिन्नत्वेन भासमानत्वमपरोक्षत्वम् त(२)च्चेत्तत्त्वमस्यादिवाक्यजन्ये ज्ञाने नास्ति तर्हि ब्रह्मणः प्रमात्रभेदानवभासाद्बोधकत्वलक्षणमप्रामाण्यं वाक्यस्य। अथ प्रमात्रभिन्नत्वेन ब्रह्मणो भानमङ्गीक्रियते तदा तदेवापरोक्षत्वमिति न तत्त्वमस्यादिवाक्यस्य परोक्षज्ञानजनकत्वमिति सिद्धम्। तस्मात्कारणान्तरस्याद्वितीये ब्रह्मण्यसम्भवाच्छब्दस्य च परोक्षज्ञानजनकत्वनियमान्नापरोक्षज्ञानसिद्धिः। तदभावाच्च नापरोक्षभ्रमकारणाज्ञाननिवृत्तिरित्यनिर्मोक्षः।

किं वा तज्ज्ञाननिवर्त्यं भावरूपमनाद्यज्ञानमिति चेत्, अना(३)दिभावस्याविनाशित्वव्याप्तत्वादात्मनि तथादर्शनात्। अन्यथा आत्मनोऽपि भावत्वेन घटादिवद्विनाशित्वप्रसङ्गः। तस्मादनादिभावत्वान्नाज्ञानस्य निवृत्तिप्रसङ्गः। न चात्मनि परमार्थसत्त्वं वा स्वप्रकाशत्वं वा नित्यत्वप्रयोजकं न त्वनादिभावत्वमिति वाच्यम्, दृष्टान्ताभावेन प्रयोज्यप्रयोजकभावस्यासिद्धत्वात्, आत्माति-

[१] A omits क after प्रकार। [२] B reads तच्च।

[३] A reads अनादिभावस्याज्ञाननिवृत्तिसम्भवः for अनादि—प्रसङ्गः।

रिक्ते परमार्थसत्वाद्यनङ्गीकारात् । किं च न(१)स्या नाद्यज्ञानस्य मानविषयत्वे मानस्य स्वविषयानिवर्तकत्वान्न माननिवर्त्यत्वं संभवति, मानाविषयत्वे च स्वप्रका(२)शत्वानङ्गीकाराच्छशविषाणादितुल्यत्वेनार्थक्रियाशून्यत्वान्न कारणत्वसम्भव इति । किं वा तस्य निवर्तकं, न तावत्स्वयमेव, न हि क्वापि स्व(३)स्य स्वयं निवर्तकत्वमुपलब्धम्, स्वस्य तथात्वे क्षणभङ्गापत्तेः। नापि ज्ञानान्तरम्, तदपि न स्वनिवर्तकमिति तत्राप्यन्यत्तत्राप्यन्यदित्यनवस्थया न कदापि कैवल्यसिद्धिः स्यात् । को वा तस्याश्रयः, न तावदात्मैव, तस्य निर्धर्मकत्वाभ्युपगमात् । अन्यधर्माश्रयत्वे कौटस्थ्यव्याघातेनाऽनित्यत्वप्रसङ्गात् । नाप्यन्तःकरणम् । तदाश्रितज्ञानस्यात्मा(४)न्तराज्ञाननिवर्तकत्वानुपपत्तेः, समानाश्रययोरेव हि(५) ज्ञानाऽज्ञानयोर्विरोधो नेतरयोरन्यथातिप्रसङ्गात् ।

---

(१) A omits अनाद्यज्ञानस्य । (२) A reads स्वप्रकाशानङ्गीकारात् । (३) A reads न हि क्वापि स्वनिवर्तकत्वमुपलब्धम्, स्वस्यतथात्वे क्षणभङ्गापत्तेः, नापि ज्ञानान्तरम्, तदपि न स्वनिवर्तकमिति तत्राप्यन्यत्तत्राऽ while B reads न हि क्वापि स्वस्यस्वयं निवर्तकमिति तत्राप्यन्यत्तत्रा but I insert स्यस्य स्वयं between स्व and निवर्तकत्व in A । (४) B read ऽत्माश्रिता-ज्ञान । (५) B omits हि ।

अज्ञानस्य च नान्तःकरणाश्रितत्वं संभवति, तस्य तत्कार्य्यत्वेन तदुत्पत्तेः प्रागपि सत्त्वात्, केवलचैतन्यमात्राश्रयत्वाभ्युपगमाच्च । को वा तस्य विषयः ? प्रत्यगभिन्नमद्वितीयप(१)रमानन्दज्ञानस्वरूपं ब्रह्मेति चेत्, किमत्र मानम् । न तावन्मनः, तस्य प्रमाणान्तरसहकारित्वेनालोकादिवत्स्वतः प्रमाणत्वाभावात्, "यन्मनसा मनुते" इत्यादिश्रुतिविरोधाच्च । तस्य मानसप्रत्यक्षत्वाभ्युपगमे च तार्किकम(२)ते प्रवेशादद्वैतवादहानिः, मनसा सुखादिविशिष्टस्यैव ग्र(३)हात् । वेदान्तश्रवणमनननिदिध्यासनसंस्कृतं मनस्तत्र मानं तेन नोक्तदोष इति चेत्, तदुपजीव्यत्वाद्वेदान्तवाक्यमेव तत्र मा(४)नं, मनस्तु केवलमपरोक्षत्वाधायकमित्यवधेयम् ।

तत्तु वादान्तरम् । प्रथमं वेदान्तवाक्यस्यैव तत्र मानत्वमुपपाद्यतां ततस्तज्जन्यं ज्ञानं वा अपरोक्षं तदुपजीवि मानसं ज्ञानं वेति विचारणीयम् । न हि निर्धर्मके वस्तुनि वाक्यस्य प्रामाण्यं संभवति । वाक्यं हि पदार्थज्ञानद्वारा बोधकम् । पदार्थज्ञानं च गृहीतसंगतिकेभ्यः पदेभ्यो वृत्त्या भवति । संगति-

---

(१) B omits परमानन्द । (२) B reads मतम । (३) B reads ग्रहणात् । (४) This is the reading of Ms. B. That of Ms. A is corrupt.

ग्रहश्च वाक्यार्थज्ञानात्पूर्वमेव प्रमाणान्तरोपस्थिते वृद्धव्यवहारादिना भवति। न चात्र निर्द्धर्मके ब्रह्मणि प्रमाणान्तरं प्रक्रमते, रूपाद्यभावेन प्रत्यक्षत्वायोगात्। तद्व्याप्यलिङ्गाभावेनानुमानागोचरत्वात्। सादृश्यरहितत्वेनोपमानाविषयत्वात्। तद्विनानुपपद्यमानार्थाभावेनार्थापत्त्याऽगम्यत्वात्। भाव(१)त्वेनाभावागोचरत्वात्। यूपाहवनीयादिवच्छास्त्रादेव तदुपस्थितिरिति चेन्न, वैषम्यात्, यूपाहवनीयादीनां शब्दशक्यतावच्छेदकधर्मवत्त्वात्, इह च सर्वधर्मातीतत्वेन पदवृत्त्यविषयत्वात्। तथाहि पदवृत्तिस्तावद् द्वेधा मुख्या जघन्या च।

तत्र मुख्या सामान्यविशिष्टव्यक्तिविषयाऽस्माच्छब्दादयमर्थो बोद्धव्य इतीश्वरेच्छारूपा सङ्केत इति तार्किकाः।

सामान्यमात्रविषयः स्वाभाविक एवार्थप्रतीतिजननसामर्थ्यलक्षणः संबन्ध इति मीमांसकाः।

तत्राद्यो न क्षोदक्षमः ईश्वरेच्छाया एकत्वेन सर्वशब्दानामेकशक्तिप्रसङ्गात्। उपाधिभेदात्तद्भेद इति चेत्, प्रतिशब्दं तद्भेदापत्तिः, शक्यतावच्छेदकैक्यादनुगम इति चेत्तदैक्येऽपि पर्यायशब्दानां शक्ततावच्छेदकभेदेन शक्तिभेदस्वीकारात्, इच्छायाः शब्दनिष्ठत्वाभावाच्च। विषयतासंबन्धाभ्युपगमे चोप-

(१) B reads भावरूपत्वेना।

चारिकत्वप्रसङ्गादतिरिक्तविषयतानभ्युपगमाच्च, लाक्षणिकशब्दस्यापीश्वरेच्छाविषयत्वेन शक्तत्वसम्भवेन लक्षणोच्छेदप्रसङ्गाच्च(१), ईश्वरेच्छायाः सा(२)धारणकारणत्वेन तत्र सत्त्वनियमात् । अन्यथा कार्यानुदयप्रसङ्गात् । ईश्वरेच्छया समं स्वरूपसंबन्धविशेषः शक्तिः, स च न लाक्षणिकेषु इति न दोष इति चेत्तस्यानिर्वचनीयत्वापत्तेर्नैवम्, तादृशेश्वरे मानाभावाच्च । स्वाभाविकं शब्दसामर्थ्यमपि षट्सु पदार्थेष्वनन्तर्भावादसदिति चेत् । अहो महतीयं विभीषिका, षट्पदार्थातिरिक्तशक्तिवादि(३)ना य(४)था तृणारणिमणिषु वह्निजननसामर्थ्यमेव कल्प्यते लाघवात्, न तु वह्निनिष्ठमतिशयत्रयं गौरवात् । तथा घटकलशकुम्भादिपदानां घटत्वप्रकारकप्रतीतिजननसामर्थ्यमेकं कल्प्यते लाघवात् । अन्यथा व्यभिचारेण कार्यकारणभा(५)वग्रहानुपपत्तेः । तथा च पारम(६)र्षसूत्रम्, 'औत्पत्तिकस्तु श(७)ब्दस्यार्थेन संबन्ध' इति तस्मात्सैवाभिधा नाम मुख्या वृत्तिः । न च घटपदे गृहीतशक्तेः कुम्भपदश्रवणादपर्यबोधः स्या(८)त् तदैक्यादिति वाच्यम्, तन्निष्ठ-

(१) A omits च । (२) B reads साधारणत्वेन । (३) B reads शक्तिवादिनाम् । (४) B adds हि after यथा । (५) B omits भाव । (६) B reads पारमर्षं । (७) A reads शब्देनार्थस्य संबन्ध इति । (८) B reads स्यादैक्यादि ।

त्वेनाग्रहणात्तव समवाय इव ममापि शक्तिपदार्थ इत्यवेहि ।

न च लाक्षणिकस्यापि (१)तत्तत्प्रकारकप्रतीतिजननसामर्थ्यरूपशक्तिसंभवाल्लक्षणोच्छेदप्रसङ्गः, अन्यथा तत्र कार्य्यानुदयप्रसङ्गादिति वाच्यम्, अन्विताभिधानवादे ला(२)क्षणिकस्यान्वितानुभवजननसामर्थ्यानङ्गीकारेणान्वि(३)तानुभवजननसामर्थ्यरूपायाः शक्तेस्तत्राप्रसङ्गात्, लक्षणायाः केवलपदार्थस्मृतिमात्रहेतुत्वात् । लाक्षणिकपदं मुक्त्वा वाचकपदस्यैवान्वयानुभावकत्वाभ्युपगमात् । अर्थवादपदानां सर्वेषां लाक्षणिकत्वेऽपि तद्युक्तविधिपदस्यान्वयानुभावकत्वाविरोधात् । अत एव लाक्षणिकं नानुभावकमिति प्रसिद्धिः शास्त्रेषु ।

अभिहितान्वयवादे तु पदशक्त्या पदार्थोपस्थित्यैव तत्रान्वयायोग्यतायां पदार्थेनैव स्वसंबन्धी पदार्थो वाक्यार्थान्वययोग्य उपस्थाप्यते, तत्र पदार्थनिष्ठैव लक्षणा न तु पदनिष्ठा । वाक्यार्थोऽपि पदार्थैरेव लक्ष्यते न तु पदैरिति न लाक्षणिकानां शक्तत्वप्रसङ्गः । पदोपस्थापितपदार्थोपस्थाप्ये लक्ष्ये पदवृत्तिविषयत्व(४)व्यवहारो वाक्यार्थशाब्दत्ववत्पर-

---

(१) A omits one तत् ।

(२) B reads लाक्षणिकपदस्या । (३) B reads न्वयानु । (४) A omits त्व ।

न्पपरयेत्यदोषः। तस्य च शक्तिपदार्थस्य सामान्यमात्रविषयत्वं लाघवादानन्त्यव्यभिचारदोषाभावाच्च। न तु सामान्यविशिष्टव्यक्तिविषयत्वं गौरवात्। तदुक्तं "विशेष्यं नाभिधा गच्छेत्क्षीणशक्तिर्विशेषणे" इति। उपाधितद्वतोश्च तादात्म्याभ्युपगमादुपाधिवाचकादपि व्यक्त्युपस्थित्युपपत्तिः(१), सामान्यस्य जातिरूपतया पच्यादिक्रियारूपोपाधिरूपतया च व्यक्तौ समवायः, तथा च सामान्यवाचकस्य व्यक्तौ आक्षेपो लक्षणा वेत्यपरे। तन्न, समवायानङ्गीकारान्नीलो घट इत्यादौ तादात्म्यप्रतीतेस्तत्रापि लक्षणानङ्गीकारात्।

वेदान्तिमते(२) सद्रूपस्यात्मनः सर्वतादात्म्यापन्नस्यैव किञ्चिद्विशिष्टस्य तत्तत्सामान्यरूपत्वादनिर्वचनीयगोत्वादिसामान्याभ्युपगमेन वा तन्मात्रे शक्तिर्न विरुध्यते। उपाधिविशिष्टव्यक्तौ शक्तिस्वीकारेऽपि नास्माकं कापि क्षतिः। सापि द्विविधा रूढिर्योगश्च। तत्र रूढिर्नाम निखिलजनपदेष्वविप्रतिपन्नप्रयोगे(३)ण वा गवाद्याकृतिवाचकत्वेन वा वृत्तिः समुदायशक्तिरित्याख्यायते, यथाक्षादिपदानां गवा-

(१) B inserts the passage between त्युपपत्तिः and आक्षेपो। (२) B reads च after मते। (३) B reads प्रयोगेन।

दिपदानां च। योगो नाम शब्दस्यान्यत्र क्लृप्तावयवद्वारेणार्थान्तरे वृत्तिः, यथा चन्द्रे रूढस्य सोमशब्दस्योमया सह वर्त्तत इति व्युत्पत्त्या महेशे वृत्तिः, यथा वा पाचकपा(१)ठकादिपदानाम्। अत एव रूढिः सर्वतो बलवती सा हि श्रुतिः, योगस्तु वाक्यम्। तेन मण्डपाश्वकर्णादिपदेषु न मण्डपानकर्तृत्वादेरन्वयः श्रुतिलिङ्गाधिकरणन्यायविरोधात्।

अत्र च(२) बाध्यबाधकभावे सापेक्षत्वनिरपेक्षत्वे एव तन्त्रम्। पदाद्विलम्बोपस्थितिकत्वशीघ्रोपस्थितिकत्वे इति केचित्।

अत्र पङ्कजादिपदेषु पद्मत्वादेर्नियमत उपस्थितेस्तस्याश्च रूढिसाध्यत्वाद्योगरूढ्याख्या मुख्यवृत्तिरिति भाट्टा नैयायिकाश्च मन्यन्ते।

प्राभाकरा वेदान्तिनश्च तन्न क्षमन्ते। यथा गोशब्दस्य नानार्थत्वेऽपि भूरिप्रयोगवशात्सास्नादिमदाकृतिविशेषस्यैव नियमत उपस्थितिः पदान्तरसमभिव्याहारादिना च शरादेस्तथा पङ्कजपदस्याऽवयवशक्तेः कुमुदपद्मयोरविशिष्टत्वेऽपि भूरिप्रयोगवशात्पद्मत्वे नियमोपपत्तेः। न च शब्दाद् वृत्त्युपस्थितस्यैव शाब्दबोधे भाननियमात्, पद्मत्वे वृत्त्यभा-

(१) B reads पङ्कजादि। (२) A reads न but it gives no sense.

वे तस्य शाब्दबोधे भानं न स्यादिति वाच्यम्, कर्त्रा-दिकारकस्याशाब्दस्यापि शाब्दबोधे भानाभ्युपगमात्, शाब्दबोधे नियतोपस्थितिकत्वस्यैव तदन्वयनियामकत्वात्। अन्यथा लक्ष्यतावच्छेदकस्य वृत्तिविषय(१)त्वाऽनभ्युपगमेन गङ्गायां घोष इत्यादौ तीरत्वादेर्भानं न स्यात्।

अथ वाऽस्तु योगरूढिरपि तृतीया वृत्तिर्न नः किञ्चिदपचीयते। जघन्यापि द्विविधा लक्षणा गौणी च। तत्र शक्यसंबन्धो लक्षणा, यथा गङ्गायां घोष इत्यत्र प्रवाहश(२)क्तस्य गङ्गापदस्य तत्संबन्धे तीरे वृत्तिः। एतस्याः साक्षाच्छक्यवृत्तित्वेऽपि परम्परया पदवृत्तित्वमित्यविरोधः। अत्र चोद्देश्यान्वयानुपपत्तिर्बीजम्। शक्यवृत्तिलक्ष्यमाणगुणसबन्धो गौणी। यथा सिंहो माणवक इत्यत्र सिंहपदस्य सिंहवृत्तिशौर्य्यादिगुणलक्षणया तद्वति माणवके वृत्तिरिति। अत एव लक्षणा गौणीतो बलवती, गौण्या वृत्तिद्वयात्मकत्वात्। तदुक्तम्, "अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते। लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता" इति।

---

(१) B reads विषयता। (२) B reads प्रवाहशक्यस्य; it gives sense by बहुव्रीहिसमास but it is not good.

अत्रोपचाराख्याऽपरा जघन्या वृत्तिरित्येके। अनियतसम्बन्धेनान्यत्र वृत्तिरुपचारः। नियतसम्बन्धेनान्यत्र वृत्तिर्लक्षणा। यथा मञ्चाः क्रोशन्तीत्यादौ पुरुषैः समं मञ्चसंबन्धोऽनियतः। गङ्गातीरयोस्तु नियत एव संबन्ध इति। तन्न। एवमवान्तरभेदेऽपि लक्षणायामेवान्तर्भावात्, शक्यसंबन्धस्योभयत्रापि तुल्यत्वाद् गौण्यास्तु वृत्तिद्वयात्मकत्वान्न लक्षणायामन्तर्भावः। न च सादृश्यसंबन्धेन सिंहपदस्य माणवके वृत्तिर्लक्षणैवेति साम्प्रतम्, सादृश्यस्य शाब्दबोधे भानाभावप्रसङ्गात्, शक्यसम्बन्धस्य स्वोपस्थापकत्वाभावात्, संबन्धिभानार्थमेव तस्य वृत्तित्वाभ्युपगमात्। तस्माल्लक्षणावैलक्षण्यादतिरिक्तैव वृत्तिर्गौणीति चतुरस्रम्।

यत्तु "यौगिको योगरूढश्च शब्दः स्यादौपचारिकः॥ मुख्यो लाक्षणिको गौणः शब्दः षोढा निगद्यते" इति वैयाकरणैः षड्विधत्वमुक्तं तन्मुख्यजघन्ययोरेवावान्तरभेदमादाय योजनीयम्॥ तथाहि, मुख्यो रूढो यौगिको योगरूढ इत्येकं त्रिकं मुख्यायाम्॥ लाक्षणिक औपचारिको गौण इत्यपरं त्रिकं जघन्यायामिति॥

व्यञ्जनाख्याऽपरा वृत्तिरित्यालङ्कारिकाः। ते तु गौणीं लक्षणामध्येऽन्तर्भाव्य मुख्यालक्षणा व्यञ्जना चेति त्रैविध्यमाचक्षते॥ व्यञ्जना च यत्र गतोऽस्तमर्क इति वाक्यप्रयोगानन्तरं इठं (१) सा गा इति परस्यान्यपदार्थस्तामिति संध्योपास्यतामित्यादि(२)बहूनां बहुविधार्थप्रत्ययो भवति। तत्र च न शक्तिर्न वा लक्षणा किं तु शब्दस्यैवान्वयव्यतिरेकाभ्यामपरा व्यञ्जनाख्या वृत्तिराश्रयणीया। तद्भेदाच्च न वाक्यभेदः शब्दतद्यार्थभेद एव तदभ्युपगमात्। अत एव सा नार्थापत्तिः नियतलिङ्गाभावात्। अन्वयव्यतिरेकाभ्यां शब्दस्यैव तत्र कारणतावधारणात्। यथाकथंचिदर्थापत्तिसंभवे(३) च शब्दप्रमाणोच्छेदापातात्, सर्वत्रैव तस्याः सुलभत्वात्। सा च शक्तिमूला लक्षणामूला व्यञ्जनामूला चेत्याद्यवान्तरभेदमप्याहुः।

तन्न, तस्या अर्थापत्त्यावन्तर्भावस्य व्यक्तिविवेकमहिम्ना दर्शितत्वात्। शब्दो हि (४) नियतसंबन्धेनैव व्यञ्जयति, अन्यथातिप्रसङ्गात्। तथा च तेनैव संबन्धेन वक्त्रभिप्रायभेदानुमानं केन वार्यते। स्वार्थानुमाने च व्यभिचारादीनामप्रसवात्। यदि च

---

(१) B reads दूरं। (२) इत्यादिरिति पाठोयुक्तः।

(३) B omits च। (४) B omits हि।

नार्थापत्तावन्तर्भवति तर्ह्यस्तु सापि शब्दवृत्तिरिति न काप्यस्माकं क्षतिः ॥

लक्षणापि त्रि (१) विधा ॥ अजहत्स्वार्था जहदजहत्स्वार्था जह (२) त्स्वार्था चेति । तत्राद्या वाच्यार्थापरित्यागेनैवान्यत्र वर्तमाना शक्तितुल्या सर्वजघन्यातो बलवती यथा काकेभ्यो दधि रक्ष्यतामिति लोके उपघातकत्वेन काकपदस्य काकतदितरेषु वृत्तिः । यथा वा "छुष्टीरुपदधाति" इत्यत्र सृष्टिशब्दस्य मन्त्रोपधेयेष्टकासु वृत्तिः सृष्टिमन्त्रबाहुल्यैनेति । गौणो धावतीत्यादि तु नोदाहरणम्, तादात्म्यसंबन्धेन तत्रापि मुख्यत्वोपपत्तेः । अत एव चतुष्टयी शब्दानां वृत्तिरिति महाभाष्यकारैरुक्तम् । चतुष्टयं च जातिगुणक्रियाद्रव्यस्वरूपम् । तत्र गौरित्यादौ जातिः । शुक्लो नील इत्यादौ गुणः । चलतीत्यादौ(३)क्रिया । डित्थ इत्यादौ(४)द्रव्यस्वरूपमेव । लक्षणाङ्गीकारे च तद्विरुध्येत 'वाक्यपदीये' चैतद्विविच्य व्याख्यातम् । येषां तु समवायाङ्गीकारस्तेषां तत्र जहल्लक्षणेति मंतोष्टव्यम् । जहदजहत्स्वार्था शक्यैकदेशपरित्यागेन शक्यैकदेश वृत्तिः ॥ इयमपि जहल्लक्षणातो गौणीतश्च ब-

(१) B reads त्रिधा । (२) This is not read by B (३) B. reads चलइत्यादौ । (४) B reads डित्थमि ।

भवती, वाच्यैकदेशान्वयात् । यथा सोऽयं देवदत्त इत्यादौ । अत्र हि तत्कालवैशिष्ट्यैतत्कालवैशिष्ट्ययोर्युगपदन्वयविरोधात्तदुपलक्षितदेवदत्तस्वरूपमेव शक्यैकदेशलक्षणया पदाभ्यामुपस्थाप्यते, इयमेव भागलक्षणेत्युच्यते । न च विशेषणस्य बाधात्तत्राऽनन्वयो न तु विशेष्ये(१)लक्षणेति वाच्यम्, परिभाषामात्रत्वापत्तेः, अन्वयप्रतियोगिपदार्थमात्रस्य वृत्त्योपस्थितत्वाङ्गीकारात्, विशेष्यबाधेन विशेषणान्वयेऽपि लक्षणाभावप्रसङ्गाच्च । न च निराकाङ्क्षत्वात्तत्र लक्षणा, विशेष्ये तु साकाङ्क्षत्वान्न लक्षणा यथा गौरनित्येत्यादाविति वाच्यम् । गोत्वविशिष्टेऽनित्यत्वान्वये गोत्वस्यापि तत्प्रसङ्गात्तदुपल(२)क्ष्यतेत्यवाच्यः । तथा च लब्धपदैव लक्षणा, एकस्य द्वयमित्यस्यापि लक्षणासाध्यत्वात् । न च जहदजहत्स्वार्थभेदेन द्वैविध्यमेव लक्षणायाः प्रसिद्धम्, नित्यो(३) गौरित्यादौ गोत्वमात्रोपस्थित्यर्थं लक्षणान्तरस्यापि संभवात्, भागलक्षणाया अपि प्रसिद्धत्वात्, परिभाषामात्रस्य (४)वाऽप्रयोजकत्वात्, अस्ति तृतीयाऽपि जहद(५)-

---

(१) A reads विशेष्य । (२) B reads तदुपलक्षितेत्य । (३) B reads नित्या । (४) B reads च । (५) B reads जहदजहत्स्वार्थलक्षणा ।

जहल्लक्षणा जहत्स्वार्था तु वाक्यार्थस्य सर्वांशत्यागेनाऽन्यत्र वृत्तिर्यथा गङ्गायां घोष इत्यादौ । इयं च गौणीतो बलवती सर्वलक्षणातो दुर्बला यतरवृत्तिसंभवे नाद्रियते, सर्वथा मुख्यार्थबाधात् ॥

तदेवं सिद्धान्तमतानुसारेणैव निरूपिताः शब्दवृत्तयः । आसामेकतरापि(१)नाद्वये ब्रह्मणि अवितुमर्हति तत्र रूढेरसंभवः प्रथमं प्रतिपाद्यते । अन्यासां तन्मूलत्वेन तन्निषेधादेव निषेधसंभवात् । सा हि व्युत्पित्सुना परिच्छिद्यते । क्वचित्प्रवृत्तिलिङ्गानुमानात् । यथा 'घटमानयेति वाक्यश्रवणसमनन्तरं कश्चित् कम्बुग्रीवादिमन्तमर्थमानयति । तस्यानयनक्रियां अव्युत्पन्न उपलभ्य तत्कारणत्वेन तस्य कृतिमनुमाय तस्याः कृतेः स्वकृतिदृष्टान्तेन प्रवर्तकज्ञानजन्यत्वमनुमिनोति । तच्च ज्ञानं शब्दान्वयव्यतिरेकानुविधायित्वात् कारणान्तरस्य चानुपस्थितेस्तस्य शब्दस्यैव घटकर्मकाऽऽनयनकर्तव्यताप्रतिपादने सामर्थ्यं कल्पयति, तत आवापोद्वापाभ्यां प्रत्येकसामर्थ्यं क्रमेण निश्चिनोतीति शक्तिग्रहक्रमः ।

एवं दिष्ट्या वर्धसे भद्र पुत्रस्ते जात इत्यादिवाक्य-

---

(१) B reads नाद्वितीये ।

श्रवणसमनन्तरं श्रोतुर्मुखविकाशादिलिङ्गेन हर्षमनुमाय तस्य च कारणान्तरानुपस्थितेः पुत्रजन्मनश्च मानान्तरेण ज्ञातत्वात्तज्ज्ञानजन्यतां निश्चित्य तज्ज्ञानं प्रत्यन्वयव्यतिरेकाभ्यामिदं वाक्यं जनकमिति कल्पयित्वा क्रमेण पूर्ववत् प्रतिपदशक्तिग्रहः । तद्वदत्र ब्रह्मज्ञानस्य प्रवृत्त्यादिजनकत्वाभावात् मानाऽन्तरागोचरत्वाच्च न तत्र शक्तिग्रहावसरः ।

क्वचिदुपमानाच्छक्तिग्रहः । यथा गोसदृशो गवय इति वाक्यं श्रुतवतो नागरिकस्य कदाचिदरण्यगमनानन्तरं गोसदृशव्यक्त्यन्तरदर्शने पूर्वश्रुतवाक्यार्थस्मरणेन गोसादृश्याद्वु गवयपदवाच्यत्वनिश्चयः ।

क्वचिद्व वैधर्म्याद्व, यथा धिक् करभमतिदीर्घग्रीवं कठोरकण्टकाशिनमित्यादि निन्दावाक्यं श्रुतवतस्ताद्व(१)ग्व्यक्तिदर्शने पूर्ववत् करभपदवाच्यत्वनिश्चयः । तदुभयं ब्रह्मणि न संभवति, साधर्म्यवैधर्म्यशून्यत्वान्मानाऽन्तराऽयोगाच्च ।

क्वचिदाप्तवाक्यात्, यथा कम्बुग्रीवादिमान् घटपदवाच्य इति । तद्वदप्यत्र न संभवति, उद्देश्यांशोपस्थापकपदाभावात्, तस्यैवाऽधुना विचार्यत्वात् ।

---

(१) B reads श ।

क्वचित् प्रसिद्धार्थपदसामानाधिकरण्यात्, यथेह सहकारतरौ पिको रौतीति तत्कर्तरि प्रत्यक्षसिद्धे पिकपदवाच्यत्वनिश्चयः । यथा वा वज्रहस्तः सहस्राक्षः पुरंदर इत्यादौ वज्रहस्ताद्याकृतिविशिष्टे पुरंदरादिपदवाच्यत्वाध्यवसायस्तद्वदपि नेह संभवति, निर्विकल्पके तस्मिन् सर्वस्यापि पदस्याप्रसिद्धार्थकत्वात् ।

क्वचिद् वाक्यशेषात्, यथा यववराहादिशब्दानाम् । यदाऽन्या ओषधयो म्लायन्ति अथैते मोदमाना एवावतिष्ठ(१)न्ते । (२)वराहं गावोऽनुधावन्ति इत्यादिवाक्यशेषात्, कङ्गुकाकादिव्यावृत्त्या वाच्यार्थविशेषनिश्चयः, यथा वा स्वर्गयूपाहवनीयादिशब्दानाम् । "यन्न दुःखेन संभिन्नम्" इत्यादिवाक्यशेषादलौकिकार्थविशेषनिर्णयः । तद्वदपि ब्रह्मणि न संभवति, वाक्यशेषस्यापि ब्रह्मविषयत्वासंभवात् । अन्यविषयवाक्यशेषेण च ब्रह्मविषयशक्त्यवधारणायोगात् ।

ननु ब्रह्मणि प्रकारान्तराऽसंभवेपि वाक्यशेषाच्छक्तिग्रहो भविष्यति । तथाहि "ब्रह्मविदाप्नोति परम्" इति परमपुरुषार्थप्राप्तिसाधनं ब्रह्मज्ञानमित्यभिहिते किं तद् ब्रह्मेत्याकाङ्क्षायां "सत्यं ज्ञानमनन्तं ब्रह्म" इति ब्रह्मलक्षणमुपदिशति । तथा च सत्यादिप-

(१) B reads वतिष्ठन्ति । (२) B reads गावो-वराहमनु ।

दोपस्यापिताऽद्वितीये वस्तुन्येव ब्रह्मपदशक्तिग्रहो भविष्यतीति चेत् । तन्न, सत्यादिपदेभ्योऽपि निर्विकल्पो(१)पस्थितेरसंभवात् । तत्रापि वाक्यशेषान्तरानुधावनेऽनवस्था ।

मा(२)भूद् विधिरूपवाक्यशेषाच्छक्तिग्रहः । निषेधरूपवाक्यशेषात्तु शक्तिग्रहो भविष्यति "तदेतद् ब्रह्माऽपूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म" इति पूर्वादिनिषेधद्वारा निर्विकल्पकोपस्थितिसंभवादिति चेन्न । तेन कियद्विशेषनिषेधे न निर्विकल्पकब्रह्मसिद्धिः । सकलविशेषनिषेधे च पदवाच्यत्वस्यापि निषेधान्न तत्र श(३)क्तिग्रहसम्भवः । "यतो वाचो निवर्त्तन्ते न चक्षुषा गृह्यते नापि वाचा" इत्यादिशास्त्रेण साक्षात्पदविषयता(४)निषेधाच्च । एतेन "अस्थूलमनणु" इत्याद्यपि व्याख्यातम् ॥ "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति, तद्विजिज्ञासस्व, तद्ब्रह्म" इति वाक्यशेषाज्जगदुपादानत्वादिवि-

---

(१) B reads कल्पकोप । (२) A reads ऽस्तु ।
(३) A omits शक्तिग्रह । (४) B reads विषयतायाः ।

शिष्टे शक्तिग्रहः सम्भवतीति चेत्। सम्भवतु, निर्विशेषस्य किमागतम् ॥

अत एव न योगोऽपि, तस्यावयवशक्तिरूपत्वेन रूढिमूलत्वात्। "बृह(१)बृहि वृद्धौ"इति धातोरौणादिकेन मनप्रत्ययेन ब्रह्मपदस्य व्युत्पन्नत्वाद् योगवृत्त्या बृहद्वाचकत्वे तस्य बृहतः संकोचकाभावाद् देशकालवस्तुपरिच्छेदशून्यत्वं पर्यवस्यति। तेन योगवृत्त्यैव सर्वपरिच्छेदशून्यं वस्तु ब्रह्मशब्देनोच्यते। तदुक्तं भाष्यकारैः "बृहतेर्धातोरन्वयानुगमाद्"इति। तथात्मपदस्य यौगिकत्वं पुराणे दर्शितम्।

"यदाप्नोति यदादत्ते यच्चात्ति विषयानिह।
यच्चास्य संततो भावस्तस्मादात्मेति कथ्यते"

इति ॥ आप्नोतेर्वाऽऽददातेर्वा अ(२)त्तेरततेर्वा रूपमात्मेति। तथाऽत्रापि प्रकृतोपयोगित्वादाद्यर्थ एव ग्राह्यः ॥ नच संको(३)चकाभावात् सर्वव्यापकं सर्वपरिच्छेदशून्यं वस्त्वात्मशब्देन योगवृत्त्योच्यत इति चेन्न। एवं सति ब्रह्मात्मशब्दयोः पर्यायतापातादनन्तशब्देन सह पौनरुक्त्यात् सत्यादिपदवैयर्थ्यापाताच्च। निर्विकल्पकस्य मानान्तरानुपस्थितत्वेन बुद्ध्यनारोहात्, तत्र योगवृत्तिविषयत्वाऽग्रहाच्च। एवं ज्ञानादिपदेऽपि यौगिकत्वं निराकार्यम् ॥

---

(१) B reads अथवृहिवृद्धौ। (२) B reads अत्तेर्वा। (३) B reads संकोचाभा।

अत एवाशक्येन सम्बन्धाग्रहणान्न लक्षणापि। न हि लक्षणयैव लक्ष्यस्वरूपोपस्थितिः तस्याः स्मारकत्वात्, स्मरणस्य च पूर्वज्ञानजन्यत्वनियमात्। यथाकथंचिदस्थूलादिवाक्यान्निर्विशेषोपस्थितावपि शक्यसंबन्धस्यापि(१)तेनैव निराकरणात् न सत्यादिवाक्येन ब्रह्मणो लक्ष्यत्वसंभ(२)वः। का वाऽत्र लक्षणा स्वीकर्तव्या, नाजहत्स्वार्था, विशिष्टोपस्थितिप्रसङ्गात्। तत्रवमस्यादिवाक्यविरोधेनाऽनन्वयापत्तेः। नापि जहदजहत्स्वार्था, तस्याः शक्यसंबन्धवति प्रमाणान्तरोपस्थिते देवदत्तादौ संभवेऽपि प्रमाणान्तरानुपस्थिते सर्वसंबन्धशून्येऽनवकाशात्। अत एव न जहत्स्वार्थापि, तदङ्गीकारे वा गङ्गापदलक्ष्यस्य तीरस्याऽगङ्गात्ववत्सत्यादिपदलक्ष्यस्याऽसत्यतादि स्यात्, वा(३)च्यार्थस्य सर्वात्मना परित्यागात्। नापि गौणी तत्र संभवति सर्वसादृश्यशून्यत्वात्। सिद्धान्तेऽपि प्रभृत्यादिगुणयोगेन गौण्याः स्वीकारः संक्षेपशारी(४)रककाराणां प्रौढिवादमात्रमिति संप्रदायः।

---

(१) अपि is omitted by B.
(२) B reads संभवनम्।
(३) A reads वाच्यत्वस्य।
(४) B reads शारीरकाचार्याणां।

नापि व्यञ्जनावृ(१)त्तिस्तत्र संभवति, तस्या अप्रामाणिकत्वात् । प्रामाणिकत्वे वा निःसंबन्धेऽप्रस(२)रादिति । तस्मादद्वितीयस्य ब्रह्मणः पदार्थत्वाभावादपदार्थस्य वाक्यार्थत्वायोगात्पदार्थवाक्यार्थयोर्भेदेऽखण्डासिद्धेरभेदे च वाक्यार्थवैयर्थ्यात्, केनापि रूपेण नाऽद्वितीयब्रह्मात्मैक्यानुभवः संभवति । तदेवं स्व(३)रूपतः प्रकारतो विषयतः आश्रयतः फलतः कारणतश्चाविद्यानिवर्तकज्ञानानिरूपणादविद्यानिवृत्त्युपलक्षित(४) आत्मैव मोक्ष इति न क्षोदक्षमं पश्यामः । इत्यनुपासितगुरवो मन्दबुद्धयः स्वयं संदिहाना एव पूर्वपक्षयन्ति, ते व्युत्पत्तिप्रकारदर्शनेनानुकम्पनीयाः कारुणिकैरिति ।

अत्रोच्यते । यत्तावदुक्तं ज्ञानस्वरूपं सत्यं मिथ्या वेति । त(५)त्र नोभयत्रापि दोषं पश्यामः । सत्यस्यैव चैतन्यस्य प्रमाणजन्यापरोक्षान्तःकरणावृत्त्यभिव्यक्तस्याऽज्ञाननिवर्तकत्वात् वृत्तेश्च कारणतावच्छेदकत्वेन दण्डत्वादिवदन्यथासिद्धत्वेन

---

(१) वृत्तिस्तत्र is omitted by B.

(२) A reads ऽप्रसवादिति ।

(३) स्वरूपतः प्रकारातोविषयतः ; this reading is omitted by B. (४) B reads लक्षितात्मैव (५) तत्र is omitted by B.

कसत्ताभावेऽपि व्यावहारिकसत्ताङ्गीकारात् । न च स्वप्नादिज्ञानतुल्यता दोषः, भावा(१)वबोधरूपसत्यत्वं हि न प्रामाण्यप्रयोजकम्, त्वन्मते घटादौ तत्सत्त्वेऽपि प्रामाण्याभावात् । किंत्वबाधितज्ञानविषयत्वम् । तच्च स्वप्नादिज्ञाने नास्त्येव । अत एव मिथ्याज्ञानविषयत्वाद् ब्रह्मापि स्वप्नादिवन्मिथ्येति परास्तम्, स्वरूपतो मिथ्यात्वस्याप्रयोजकत्वात् । विषयतो मिथ्यात्वस्य बाधाभावादसिद्धेः । धूमभ्रमजन्यवह्न्यनुमितेरपि अबाधितविषयतयाऽप्रामाण्यानङ्गीकाराच्च । कल्पितेनापि प्रतिबिम्बेन वास्तवबिम्बानुमानप्रामाण्याच्च, स्वप्नार्थस्याप्यरिष्टादिसूचकत्वाच्च । क्वचित्त(२)दुपलब्धसन्त्रादेर्जागरेऽप्यनुवृत्तेरबाधाच्च । एवं मिथ्याभूतादपि ज्ञानात्पारमार्थिकी ब्रह्मप्राप्तिर्न विरुध्यते । पारमार्थिकत्वे बाधाभावस्यैव प्रयोजकत्वात् ।

एवं सप्रकारत्वनिष्प्रकारत्वविकल्पोऽप्यनुपपन्नः । सप्र(३)कारकत्वस्यानङ्गीकारेण पराहतत्वात् । न च निष्प्रकारकस्या(४)ज्ञाननिवर्तकत्वमनुपपन्नम्, अधिष्ठानप्रमात्वेनैवाज्ञाननिवर्तकत्वात् । यच्च

(१) The text reads नवबोध but it is wrong.

(२) A omits तत ।

(३) A reads सप्रकारस्यानङ्गीकारपराहतत्वात् ।

(४) B reads ज्ञाननिवर्तकस्या after निष्प्रकारकस्या ।

स(१)प्रकारकमधिष्ठानं तत्र सप्रकारा प्रमाऽपेक्ष्यते। यत्र तु निष्प्रकारकमधिष्ठानं तत्र निष्प्र(२)कारकैव प्रमाऽपेक्ष्यते, तस्या एव तत्र समर्थत्वात्। न चैवं कार्य्यकारणभावद्वयकल्प(३)नागौरवम्, अधिष्ठानप्रमात्वेनानुगतत्वात्। अधिष्ठानत्वं च भ्रमजनकाज्ञानविषयत्वम्, अज्ञानविषयत्वमात्रं वा। न चैवं सति प्रमेयं द्रव्यमित्यादिज्ञानादपि घटाद्याकाराऽज्ञाननिवृत्तिप्रसङ्गः अधिष्ठानविषयप्रमात्वादिति वाच्यम्, प्रमेयत्वस्य केवलान्वयिनोऽनङ्गीकारात् न तज्ज्ञानस्य सर्वविषयत्वम्। द्रव्यमिति ज्ञानस्य(४) च घटत्वादिसामान्याऽविषयत्वाद्व्यक्तिमात्रविषयत्वेऽपि न विशिष्टविषयत्वम्। एवमिदमिति ज्ञानस्याऽपि पुरोदेशवृत्तिव्य(५)क्तिमात्रविषयत्वम्, न(६) घटत्वादिविषयत्वम्। उत्तरकाले संशयदर्शनात्। तेन ततो न विशिष्टविषयाऽज्ञाननिवृत्तिप्रसङ्गः, समानप्रकारकत्वविशेषणप्रक्षेपेऽपि प्रमेयवानितिज्ञानात्सर्वविषयाऽज्ञाननिवृत्तिप्रसङ्गः। घटत्वादेरपि प्रमे-

(१) A reads सप्रकार। (२) A reads निष्प्रकारैव। (३) B reads कल्पने। (४) B omits च। (५) व्यक्ति is omitted by A.
(६) A does not read न घटत्वादिविषयत्वम्।

यत्वेन तज्ज्ञानस्य घटत्वादिप्रकारकत्वात् । अत एव सामान्यधर्माऽप्रकारके(१)ति विशेषणप्रक्षेपेऽपि न निस्तारः । प्रमेयो घट इत्यादिज्ञानात् घटाद्याकाराऽज्ञाननिवृत्त्यभावापातात्, विषयत्वप्रकारकत्वादेरनुगतस्याभावाच्च । अथैतद्दोषपरिजिहीर्षया विशिष्य कार्यकारणभावः कल्पनीयः, घटाऽज्ञानत्वेन नाश्यता घटत्वप्रकारकप्रमात्वेनैव नाशकता, एवं सर्वत्रापीति चेत्, तर्हि सर्वत्र कार्य्यकारणभावानां भिन्नत्वाद(२)पि यत्र यावता विशेषणेन विना न निर्वहति तत्र तावदेवोपादातव्यम् । अत्र च ब्रह्माज्ञाननिवृत्तित्वेन ब्रह्मप्रमात्वेनैव कार्य्यकारणभावोपपत्तौ न ब्रह्मत्वप्रकारकेति विशेषणमुपादेयम्, गौरवादनुपयोगाद्विरोधाच्च । अत एव व्यवहारत्वेन व्यवहर्तव्यज्ञानत्वेन कार्यकारणभावे व्यवहर्तव्यत्व(३)स्यानुगतस्याभावात् घटव्यवहारत्वेन घटज्ञानत्वेनेत्यादिविशेषपर्य्यवसाने घटज्ञानव्यवहारत्वेन घटज्ञानत्वेनैव कल्प्यते कार्य्यकारणभावो न तु घटज्ञानज्ञानत्वेन, गौरवादनुपयोगाद्विरोधाच्चेति । घटज्ञानस्यैव स्व(४)व्यवहारहेतुत्वेन स्वप्रकाशत्वसि-

---

(१) B reads केसविशे । (२) B omits अपि । (३) त्व is omitted by A (४) B omits स्व० ।

द्धिरित्यन्यदेतत् । अथवा सामान्यधर्ममात्राऽप्रकारकसमानविषयप्रमात्वसज्ज्ञाननिवृत्तौ प्रयोजकम् । अत्र प्रमेयमिति ज्ञानेऽतिव्याप्तिनिवारणाय सामान्येति । प्रमेयो घट इत्यादावव्याप्तिवारणाय मात्रेति विशेषणम् । तेनेदं विशेषप्रकारके निष्प्रकारे चानुगतम् । न च सामा(१)न्यधर्मप्रकारके ज्ञानेऽव्याप्तिः इदमनिदं वा प्रमेयमप्रमेयं वेत्यादिसंशयाद्यदर्शनात् सामान्यमात्रप्रकारकज्ञानाऽनङ्गीकारेण तद्वारणस्यानौचित्यात् । अत्र चाऽप्रामाण्यशङ्काऽनास्कन्दितत्वं प्रमाविशेषणं सर्वत्र द्रष्टव्यम् । तच्चाप्रामाण्यशङ्काद्यसमवहितत्वं दोषविशेषाऽसहकृतत्वं वा, तेन नासंभावनादिकलुषितज्ञाने व्यभिचारः । न हि प्रतिबन्धवशेन कार्यमजनयतो हेतोरहेतुत्वं भवति ।

यत्तु सत्तावधारणरूपज्ञानस्याज्ञाननिवर्तकत्वाभ्युपगमादनभ्यासदशापन्नज्ञानस्य च तद्रूपत्वाभावादुक्तविशेषणमन्तरेणापि न व्यभिचार इति, तदसत् । एककोटिकज्ञानस्य सत्तावधारणरूपज्ञानादन्यूनाऽनधिकविषयस्य प्रमाणजनितस्य किं नाम सत्तानवधारणरूपत्वम्, येन न व्यभिचार इति । निश्चयत्वाभाव इति चेन्न । संशयभिन्नत्वस्य जातिविशेषस्य वा

(१) B reads सामान्यमात्रप्रकारके ।

निश्चयत्वस्याभाव्यङ्गीकारात् । संशयादिविरोधित्वं निश्चयत्वम्, तच्चात्र नास्त्युत्तरकाले संशयादिदर्शनादिति चेत्, तर्ह्यायातं मार्गे । तच्चास्मदुक्ताऽप्रामाण्यशङ्काऽनास्कन्दितत्वातिरिक्तं न पश्याम इत्यलमव्युत्पन्नविडम्बनया ।

नन्विदं तार्किकमतसिद्धनिर्विकल्पकेऽतिव्याप्तम्, तत्रोक्तरूपसत्त्वादज्ञानानिवर्तकत्वाच्च । तत्र मानाभावाद्विशिष्टज्ञानमात्रं प्रति विशेषणज्ञानत्वेन कारणत्वात् घटोऽयमिति विशिष्टज्ञानेऽपि विशिष्टज्ञानत्वेनैव हेतुना, विशेषणज्ञानजन्यत्वं दण्डी पुरुष इत्यादिज्ञानदृष्टान्तेनानुमीयते । तच्च ज्ञानमनवस्थाभयादविशिष्टमेव सिध्यतीति चेन्न, प्रत्यक्षानुमितत्वव्यतिरेकेण विशिष्टज्ञानत्वस्य कार्य्यतावच्छेदकत्वे मानाभावात् । तस्मिन् सत्यपि प्रत्यक्षत्वा(१)दिरूपेण कार्य्यकारणभावस्यावश्यकत्वात् तस्य च विशेषणविशेष्येन्द्रियसन्निकर्षादिरूपेण क्लृप्तत्वादेव नालौकिकं कार्य्यकारणभावान्तरं कल्पनीयम् । तस्य च नित्यानुमेयत्वाभ्युपगमान्न मानान्तरसम्भावनापि । यदि च तार्किकैः सहैकरूप्यमपेक्षितं तदाऽपरोक्षस्वरूपेति प्रमा विशेषणीया । तार्किकसिद्धनिर्विकल्पस्य नित्यानुमेयत्वेनापरोक्षस्व(२)रूपत्वाभा-

---

(१) A omits त्व ।  (२) B reads रूपत्वा ।

वात्। अस्मन्मते तु तस्यार्थात् साक्षिवेद्यत्वान्न कोऽपि दोषः।

तदयं निर्गलितार्थः। सामान्यधर्ममात्राप्रकारकसमानविषयकदोषविशेषाऽसहकृताऽपरोक्षप्रमात्वमज्ञाननिवर्तकतावच्छेदकम्। अपरोक्षत्वं च स्वरूपतो विषयतश्च विवक्षितमिति नानुमानादौ निर्विकल्पके वा(१)ऽतिव्याप्तिः।

ननु ब्रह्मणो निर्धर्मकत्वात्तत्र वि(२)षयताया अप्यनुपपन्नत्वात्तद्विषयज्ञानत्वमपि दुर्लभम्, विषयता हि कर्मता तदङ्गीकारे तस्य क्रियाफलशालित्वेन घटादिवज्जडत्वापत्तेश्च, तद्विषयतासम्भवेनैव ज्ञानं तदज्ञाननिवर्तकमिति चेन्न। समानविषयत्वस्य निवर्तकतावच्छेदकत्वात्, अन्यथाऽतिप्रसङ्गात्, तद्विषयज्ञानाजनने तत्र वेदान्तानां प्रामाण्यानुपपत्तेश्च। न(३)च तस्य तदज्ञाननिवर्तकत्वं तेन च तदज्ञाननिवर्तकत्वमात्रेण तद्विषयत्वमुपचर्यत इति वाच्यम्। अन्योन्याश्रय(४)त्वात्, तद्विषयत्वेन तदज्ञाननिवर्तकत्वं तेन च तद्विषयत्वमिति। न च तद्विषयतामात्रेणाज्ञाननिवर्तकत्वं क्वापि सिद्धम्(५)।

---

(१) B reads चा। (२) B reads तद्विषयताया।
(३) A reads न च तदज्ञाननिर्वतकतामात्रेण तद्विषयमुपचर्यत इति वाच्यम्। (४) B omits त्व।
(५) B reads दृष्टम्।

तस्यैवाधुना विचार्यत्वात् । कल्पिता विषयता न कर्मत्वमावहतीति चेन्न, वास्तवविषयतायाः कुत्राप्यनङ्गीकाराद् व्यावहारिकत्वस्य समानत्वात् ।

अत्र ब्रूमः । ब्रह्मणो ज्ञानविषयताया असंभवेऽपि ज्ञानस्य ब्रह्मविषयता वर्तते, सा च तद्धिस्वग्राहकत्वं वाऽन्य(१)देव वा किंचिदनिर्वचनीयम् । न च द्रव्यातिरिक्तस्य जन्यधर्माऽनाश्रयत्वादजन्यत्वे चातिप्रसङ्गादनिरूपणाच्च कथं ज्ञाननिष्ठा विषयतेति वाच्यम्, ज्ञानस्याप्यन्तःकरणपरिणामत्वेन द्रव्यत्वात्, द्रव्यत्वाभावेऽपि जन्यधर्माश्रयत्वे विरोधाभावाच्च, द्रव्यादिपरिभाषाया अप्रयोजकत्वाच्च । विषयतैव चाकारः प्रतिविषयं विलक्षणः । अत एव ब्रह्माकारापरोक्षप्रमात्वेनैवाज्ञाननिवृत्तिकारणताया-मनतिप्रसक्तायां सम्भवन्त्यां न सामान्याप्रकारकेति विशेषणमपेक्षितम्, अ(२)ज्ञाननिवर्तकत्वस्वरूपाकारापरोक्षप्रमात्वस्य सर्वत्रानुगमाच्च । न चेदमित्याकारं ज्ञानं घटाकारमिति शङ्कितुमपि शक्यम् । आकारभेदस्य स्फुटतरसाक्षिप्रत्यक्षत्वात् । अन्यथा तयोर्ज्ञानयोरेकप्रकारत्वस्यापि निरू(३)पेण वक्तुं शक्य-

(१) B reads अन्यदेव किञ्चिच्चानिर्वचनीयम् ।
(२) A reads अज्ञानविषयस्वरूपा ।
(३) B reads निश्चयेव ।

त्वात् । तत्र चानुभव एव शरणम् । तच्च प्रकृतेऽपि तुल्यम् ।

अस्तु वा ब्रह्मण्यपि कल्पिता विषयता । न च कर्मत्वेन जडत्वापात इति वाच्यम्, स्वसमानसत्ताकविषयताया एव कर्मत्वापादकत्वात् । सा च घटादौ संभवति । उभयोरपि व्यावहारिकत्वेन तुल्यत्वात् । ब्रह्मणि तु परमार्थसति व्यावहारिक्यपि विषयता परमार्थसत्त्वाभावेन न समानेति किमनुपपन्नम् । एतेन "तं त्वौपनिषदम्" इति श्रुतिरप्यनुगृहीता भवति ।

अथवा चैतन्यविषयतैव जडत्वापादिका न तु वृत्तिविषयता(१)पि । "यतो वाचो निवर्तन्ते," "न चक्षुषा गृह्यते नापि वाचा," "तं त्वौपनिषदं पुरुषं पृच्छामि," "नावेदविन्मनुते तं बृहन्तम्," "वेदेनैव यद्वेदितव्यम्" इत्याद्युभयविधश्रुत्यनुसारेण कल्पनात् ।

यत्तु फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निराकृतम् । ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरपेक्षितेत्युक्तत्वात्फलव्याप्यत्वमेव जडत्वापादकमित्याहुः ।

तन्न । प्रमाणजन्यान्तःकरणवृत्त्यभिव्यक्तचैतन्यस्यैव शास्त्रे फलत्वव्यपदेशात्, तद्व्याप्यत्वस्यैव जडत्वापा-

(१) B omits अपि ।

दकत्वे(१)प्रमाण इव साक्षिभास्यानामपि जडत्वं न स्यात्। चैतन्यकर्मता तु चिद्भिन्नत्वावच्छेदेन सर्वत्रैवेति सैव जडत्वप्रयोजिका। उदाहृतकारिकायामपि चैतन्यमात्रपरमेव फलपदमिति द्रष्टव्यम्। न तु वृत्तिविषयत्वे तदुपरक्तचैतन्यविषयत्वमपि नियतम्, वृत्तेश्चिदाकारगर्भितया एवोपपत्तेः। तदुक्तम्। "विषद्वस्तुस्वभावानुरोधादेव न कारकात्। वियत्संपूर्णतोत्पत्तौ कुम्भस्यैवं तथा धियाम्। घटदुःखादिरूपत्वं धियो धर्मादिहेतुतः। स्वतःसिद्धार्थसंबोधव्याप्तिर्वस्त्वनुरोधतः" इति। तथा च चैतन्यविषयत्वेन जडत्वं दुर्वारमेव (२), वृत्त्युपरक्तचैतन्यस्य स्वयमेव चैतन्यरूपत्वान्न तद्व्याप्यता फले फलान्तरानुपपत्तेः। तद्भिन्नानां तु स्वतो भानरहितानान्तद्व्याप्तिरवश्यमाश्रयणीयेति न कोऽपि दोषः। तदुक्तम्। "परागर्थप्रमेयेषु या फलत्वेन संमता। संवित् सैवेह मेयोऽर्थो वेदान्तोक्ति प्र(३)माणत" इति।

नन्वेवं कल्पितविषयतावत् कल्पितप्रकारोऽपि किमिति नाङ्गीक्रियते, तथा सति नोक्तकार्यकारणभावादिकल्पनाक्लेश इति। मैवम्। प्रकारस्य

---

(१) A reads जडत्वापादकत्वम्। (२) A and B reads न but it gives no sense. (३) B reads प्रसाद०।

भासमानवैशिष्ट्यप्रतियोगित्वाद् विशेषणत्वेन ज्ञान-विषयत्वमवश्यं वाच्यम् । तथा च ज्ञानस्य स्वविषयानिवर्तकत्वात्तस्य प्रकारस्यानिवृत्तिप्रसङ्गः । केवल-चैतन्यागोचरस्य केवलचैतन्यगोचराज्ञाननिवर्तक-त्वायोगाच्च । अन्यानुपरक्तचैतन्यभानस्यैव पूर्वोक्तरूपेणाज्ञाननिवर्तकत्वात्, विषयतायास्तु तज्ज्ञान-भासकसाक्षिवेद्यत्वेऽपि तज्ज्ञानाविषयत्वात् अन्या-नुपरक्तचैतन्यगोचरत्वमुपपद्यत इति वैषम्यम् । तस्मादुपपद्यते ब्रह्मविषयता निष्प्रकारकज्ञानस्य । अत एव चा(१)द्यक्षणे वृत्तितद्गतोः साक्षिभास्यत्वेऽपि न वृत्तेर्निर्विकल्पकत्वविरोधः । तस्याः पदार्थशोध-कतर्कसंस्कृतशब्दजन्याया अद्वितीयचैतन्यमात्राकार-त्वाद्, इयमेव प्रमाणफलावस्थोच्यते । द्वितीयक्षणे तु चिन्मात्राकारग्रहणलब्धबलया वृत्त्या चिन्मात्रगोच-राज्ञानं निवर्त्यते, रज्ज्वाकारग्राहिण्या वृत्त्येव तदज्ञा-नम् । ततोऽहंकारजीवब्रह्मविभागाद्यध्यासनिवृत्तिः, उपादाननाशस्यैवाव्यवधानोपादेयनाशप्रयोजकत्वात्, अज्ञानस्यैव च तदुपादानत्वात् । ततस्तेन सहैव वा तदनन्तरं वा तदुपादेयचैतन्याभिव्यञ्जकवृत्तिनि-वृत्तिः । एवमिन्द्रियदेहा(२)द्यध्यासानामपि निवृत्तिः । एवं तदुपरि कस्याप्यवच्छेदकस्याभावादनुपहित-

(१) B omits च । (२) B omits आदि ।

चैतन्यं जीवब्रह्मजगद्विभागशून्यं कवलीकृताज्ञानतत्कार्यं स्वप्रकाशपरमानन्दरूपतया सर्वदा भासमानमेव तिष्ठति, सैव मोक्षावस्थेत्युच्यते। अज्ञानस्य चानादित्वेनाजन्यत्वात् पुनरनाद्यज्ञानान्तरस्य चानङ्गीकारादेकस्या एवाज्ञानव्यक्तेः सर्वोपादानभूताया आत्यन्तिकनिवृत्तौ तत्कार्यभ्रा(१)न्त्यादिप्रपञ्चस्यात्यन्तिकनिवृत्त्या न संसारस्य पुनरावृत्तिः।

एतेन ज्ञा(२)नं स्वनिवर्त्यमन्यनिवर्त्यं वेति विकल्पोऽपि निरस्तः, तस्य स्वकारणनाशनिवर्त्यत्वात्। उपादानकारणनाशस्य कार्यनाशकत्वे सर्वेषामविवादात्। दृश्यत्वेन रूपेणाविद्यया सह स्वनिवर्त्यत्वेऽपि न दोषः। निवर्त्यतानिवर्तकतयोरवच्छेदकैक्ये क्षणभङ्गो भवेत्। अत्र चोक्तप्रमाविशेषत्वेन निवर्तकता दृश्यत्वेन निवर्त्यतेति नोक्तदोषः।

ननु तर्हि स्वप्नाद्यध्यासादिकारणीभूताज्ञानस्य जागरादिप्रमाणज्ञानेन निवृत्तौ पुनः स्वप्नाद्यध्यासो न स्यात्, उक्तयुक्तेस्तुल्यत्वात्। तत्रानेकाज्ञानस्वीकारे आत्मन्यपि तथा संभवेन मुक्तावना-

(१) B reads प्रामात्रादि। (२) B reads तज्ज्ञानं।

श्वासप्रसङ्गात् । नन्वनयैवानुपपत्त्या तत्राज्ञाननिवृत्तिर्नाङ्गीक्रियते । एकस्यामेव रज्ज्वामज्ञातायां सर्पभ्रमेण धाराभ्रमतिरोधानवज्जागरादिभ्रमेणाऽपि स्वप्नादिभ्रमतिरोधानमात्रं क्रियते । अज्ञाननिवृत्तिस्तु ब्रह्मात्मैक्यविज्ञानादेवेति न मुक्तावनाश्वासप्रसङ्गः । मै(१)वम् । ब्रह्मात्मैक्यज्ञा(२)नादपि अज्ञाननिवृत्तिसम्भावना न स्यात् । कुत्रापि ज्ञानादज्ञाननिवृत्तेरदर्शनादिति वृद्धिमिष्टवतो मूलमपि हारित(३)म् ।

अत्र ब्रूमः । नोभययाप्यनुपपत्तिः । तथाहि जागरादिज्ञानाद(४)पि स्वप्नाद्यध्यासादिनिवृत्त्यभ्युपगमपक्षे मूलाज्ञानस्यैव विचित्रानेकशक्तिस्वीकारादेकशक्तिनाशेऽपि शक्त्यन्तरेण स्वप्नान्तरादीनां पुनरावृत्तिः संभवति । सर्वशक्तिमतो मूलाज्ञानस्यैव निवृत्तौ तु कारणान्तरासंभवात् तादृशस्य च द्वितीयस्यानङ्गीकारान्नाहंकाराद्यध्यासानां पुनरुत्पत्तिः संभवतीत्यपुनरावृत्तिसिद्धिः । रज्जुज्ञानादिनाऽज्ञाननिवृत्त्यनङ्गीकारेऽपि न कोऽपि दोषः । चिन्मात्रस्यैवाज्ञानाश्रयत्वविषयत्वसंभवात् । जडे प्रमाणप्रयोजनाभावेन तदनङ्गीकारात् ।

---

(१) B inserts एवं सति between मैवम् and ब्रह्मात्मै ।
(२) B reads विज्ञानादपि । (३) B reads स्यात् after हारितं । (४) B omits अपि ।

न चाज्ञानस्य चिन्मात्राश्रयत्वे कथमन्तःकरण-वृत्तिरूपेण ज्ञानेन तन्निवृत्तिः भिन्नाश्रयत्वात् । ज्ञानस्य च जन्यत्वेन चिन्मात्राश्रयत्वानुप(१)पत्तेः तस्य कूटस्थस्वभावत्वात् । अज्ञानस्य चानादित्वेन कौटस्थ्याऽव्याघातकत्वादित्युक्तमिति वाच्यम्, चैतन्यान्तःकरणयोस्तादात्म्याध्यासेनान्तःकरणधर्मस्यापि चैतन्यधर्मत्वानपायात्। तदुक्तं पञ्चपादिकाकृद्भिः "आनन्दो विषयानुभवो नित्यत्वं चेति सन्ति धर्माः अभेदेऽपि चैतन्यात्पृथगिव भासन्ते" इति । तार्किकैरपि कर्णशष्कुल्यवच्छिन्नाकाशेन स्वसमवायसंबन्धेन महाकाशाश्रितशब्दग्रहणमङ्गीक्रियते । उपहितेऽपि स्वरूपैक्यानपायादिति ज्ञानाज्ञानयोः समानाश्रयत्वोपपत्तिः ।

न च ज्ञानस्य क्वापि अविद्यानिवर्तकत्वादर्शनात् ब्रह्मज्ञाने(२)ऽपि तत्कल्पनं न स्यादिति वाच्यम्, न हि अनुमानाद् ब्रह्मज्ञानस्य अज्ञाननिवर्तकत्वं वयं साधयामः, येन व्याप्तिग्रहार्थम् उदाहरणापेक्षा भवेत्, किं तु श्रुत्या श्रुतार्थापत्त्या चेति ब्रूमः। तत्र श्रुतिस्तावत् "तमेव विदित्वाऽतिमृ(३)त्युमेति" मृत्युरविद्य इति शास्त्रे प्रसिद्धम् । तथा

(१) B reads नुपपत्तिः। (२) A omits अपि।
(३) B omits मृत्युम ।

तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिः" । स्मृतिश्च—"दैवीह्येषा गुणमयी मम माया दुरत्यया । मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते । ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः । तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम्" इत्यादि । एवं "ब्रह्म वेद ब्रह्मैव भवति" "तरति शोकमात्मवित्" "तरत्यविद्यां विततां हृदि यस्मिन्निवेशिते । योगी मायाप्रमेयाय तस्मै ज्ञानात्मने नमः" इति । अविद्यायाः परं पारं तारयसीत्यादि श्रुतार्थापत्तिश्च । ब्रह्मज्ञानाद् ब्रह्मभावः श्रूयमाणस्तद्व्यवधायकाज्ञाननिवृत्तिमन्तरेण नोपपद्यते इति ज्ञानादज्ञाननिवृत्तिं गमयति । "अनृतेन हि प्रत्यूढा नीहारेण प्रावृता", "अन्यद्युष्माकमन्तरं बभूव", "अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः" इत्यादि श्रुतिस्मृतिभ्योऽज्ञानमेव मोक्षव्यवधायकमवगतम् ।

किं च भगवतो नीलाचलनाथस्य भजनाऽञ्जननिर्मलीकृतज्ञानचक्षुःप्रत्यक्षेणैवाज्ञाननिवृत्तिमनुभवति । तत्र का विप्रतिपत्तिः । यदि हि कस्यचिदपि तत्त्वा-

बोधे जाते नाज्ञानं निवर्त(१)त ततो व्यभिचारा-त्कारणता न स्यात्, न तु क्वापि तथा दर्शनमस्ति, एकस्यैव तत्त्वज्ञानेनाज्ञाननिवृत्त्यभ्युपगमात्। जीवा-न्तरप्रतिभासस्य च स्वाप्निकजीवान्तरप्रतिभासवद्वि-भ्रममात्रत्वात् । जीवन्मुक्तौ तूपपत्तिं वक्ष्यामः। एतेनाज्ञानं न ज्ञाननिवर्त्यम् अनादिभावत्वात् ब्र(२)ह्मवदिति परास्तम् उक्तश्रुतिस्मृत्यादिबाधि-तत्वात्। कीदृशं च भावत्वमज्ञानस्याऽविनाशित्वे प्रयोजक(३)म्, सत्त्वसभावविलक्षणं वा। आद्यं सदसद्विलक्षणेऽज्ञानेऽसिद्धं तस्य सर्वप्रमाणबाध्यत्व-स्वरूपस्य सत्त्वायोगात्। द्वितीयं तु नाविनाशित्व-प्रयोजकम्, अनुकूलतर्काभावात् प्रतिकूलतर्कपरा-हतत्वाच्च, सत्त्वस्यैवा(४)विनाशित्वप्रयोजकत्वाच्च।

न चात्मातिरिक्ते सत्त्वाभावेन व्याप्तिग्रहानव-सरः, सत्त्वाभावस्य विनाशित्वप्रयोजकत्वेन व्यतिरेकि-णस्तस्य सिद्धेः। एवं दृश्यत्वपरिच्छिन्नत्व-जडत्वादिनाप्यज्ञानस्य विनाशित्वनिश्चयः। "भूयश्चान्ते विश्वमायानिवृत्तिः" इत्यादिवा-क्यैः कण्ठत एव विनाशित्वप्रतिपादनाच्च। न च श्रुतिविषयत्वे ब्रह्मवदबाध्यत्वप्रसङ्गः, श्रुतिता-

(१) B reads निवर्त्येत।

(२) B reads आत्मवद्। (३) B reads उच्यते after प्रयोजकम्। (४) B reads ह्यात्मावि।

त्पर्यविषयत्वस्यैवाबाध्यत्वप्रयोजकत्वात् । श्रुतेश्च प्रयोजनवति मानान्तरानधिगते तात्पर्यमुपक्रमादिषड्विधलिङ्गेनावधार्यते । अज्ञानस्य च अहमज्ञ इति साक्षिसिद्धत्वात् तत्प्रतिपादने प्रयोजनाभावाच्च न श्रुतितात्पर्यविषयत्वम्, वक्ष्यमाणरीत्या तु ब्रह्मण्येव तात्पर्यनिश्चयात् । एवं च(१)यति साक्षिसिद्धस्यैव भावरूपाज्ञानस्याऽभावविलक्षणत्वादिकमनुमानादिना साध्यत इति न कोऽपि दोषः। शुक्तौ रजतज्ञानवानयमिति मिथ्यासंसर्गस्यापि तत्त्वज्ञानविषयत्ववदस्माकं किं न स्यात् ।

एतेन मानविषयत्वेऽज्ञानस्य मानानिवर्त्यत्वं, मानाविषयत्वे तु स्वप्रकाशत्वानङ्गीकाराच्छशविषाणादिवदलीकत्वमित्यपास्तम् । स्वरूपतो मानाविषयस्यापि साक्षिसिद्धत्वाभ्युपगमात्, तस्य च भ्रमप्रमासाधारणत्वात् । तदुक्तम् "अविद्याया अविद्यात्वे इदमेव तु लक्षणम् । माना(२)घातमासहिष्णुत्वमसाधारणमिष्यते । अविद्यास्येत्यविद्यायामेवासिद्ध्या प्रकल्प्यते । ब्रह्मदृष्ट्या त्वविद्येयं न कथञ्चन युज्यत" इति च । तस्मादविद्याया अपि रज्जुभुजङ्गवदात्मन्यारोपितत्वादात्मस्वरूपज्ञानेन तन्निवृत्तिरुपपद्यत इति ।

---

(१) B omits च। (२) B reads मानाद्यसहिष्णुत्वं हि असा।

यत्तू(१)क्तम्-तज्ज्ञानं परोक्षमपरोक्षं वेति तत्रा-परोक्षमेवेति वदामः ।

ननु(२)तत्र कारणासम्भव उक्तः शब्दस्य परोक्षज्ञा(३)नजननस्वाभाव्यात् कारणान्तरस्य चात्रासम्भवादिति ।

अत्र केचित्तार्किकेभ्यो बिभ्यतः शब्दात्परोक्षज्ञानमेवाङ्गीकृत्य भावनासहकृतान्मनसोऽपरोक्षज्ञानमाचक्षते ।

अन्ये तु मन्यन्ते—शब्दादापाततः परोक्षज्ञानमेव जायते करणस्वाभाव्यात् । उत्तरकालं तु श्रवणमननिदिध्यासनादि(४)सहिताच्छब्दादेवापरोक्षज्ञानमुदेति संस्कारसहकृतेन्द्रियादिवत् प्रत्यभिज्ञानमिति ।

तत्राद्यः पक्षस्तावदयुक्तः, भावनाजन्यत्वे ज्ञानस्याप्रामाण्यप्रसङ्गात्, कामातुरस्य कामिनीं भावयतो व्यवहितकामिनीसाक्षात्कारवत् ।

ननु न भावनाजन्यत्वं तत्राप्रामाण्यप्रयोजकम्, किन्तु बाधितविषयत्वम् । भावनानपेक्षेऽपि शुक्तिरजतादिभ्रमे बाधादेवाप्रामाण्यस्वीकारात् । ब्रह्मणि तु सर्वमानागोचरे बाधासम्भवात् तद्भावनाजन्यज्ञान-

(१) B reads यदुक्तम् ।

(२) B reads तत्र कारणान्तरासम्भ । (३) A omits जनन ।

(४) B adds संस्कार before सहिता ।

स्यापि प्रामाण्यं न व्याहन्यते । न च व्यवहितकामिनीविभ्रमादौ दोषत्वेन भावनायाः कल्पतत्वात्तज्जन्यत्वे ब्रह्मसाक्षात्कारस्य दोषजन्यत्वेन भ्रमत्वं भविष्यति । बाधितविषयत्ववद्दोषजन्यत्वस्यापि भ्रमत्वप्रयोजकत्वात् । तथा च मीमांसाभाष्यकृद्भिः "यस्य च दुष्टं करणं यत्र च मिथ्येतिप्रत्ययः स एवासमीचीनो नान्यः" इति । तद्वार्त्तिककारैश्च "तस्माद्द्बोधात्मकत्वेन प्राप्ता बुद्धेः प्रमाणता । अर्थान्यथा तु हेतूत्थदोषज्ञानादपोद्यते" इति तुल्यवदेवाप्रामाण्यप्रयोजकद्वयमुक्तम् । तस्माद्बाधाभावेऽपि दोषजन्यत्वादप्रामाण्यमेवेति वाच्यम् । भावनायाः क्वचिद्दोषत्वेऽपि सर्वत्र दोषत्वानिश्चयात् । अन्यथा शङ्खपीतत्वभ्रमकारणीभूतस्य पीतद्रव्यस्य स्वविषयज्ञानेप्यप्रामाण्यप्रयोजकत्वं स्यात् । क्वचित्क्व(१)चिद्दोष इत्येवाङ्गीकारात् विषयबाधेनैव दोषजन्यत्वप्र(२)-कल्पनाच्च । दुष्टक(३)रणजन्यस्याप्यनुमानादेर्विषयाऽबाधेन प्रामाण्याभ्युपगमाच्च । अन्यथा परिभाषामा-(४)त्रत्वापत्तेः । मीमांसाभाष्यवार्त्तिककाराभ्यामपि

(१) B reads क्वचित्कश्चिद्दोषः । (२) B omits प्र ।
(३) B reads कारण । (४) A reads परिभाषामात्रापत्तेः ।

बाधितविषयव्याप्यत्वेनैव दुष्ट(१)करणजन्यत्वस्याऽप्रामाण्यप्रयोजकत्वमुक्तं न स्वातन्त्र्येण । तस्माद्भावनाजन्यमपि ब्रह्मज्ञानमबाधात्प्रामाण्यं लभतामिति ।

नैवम्, परोक्षज्ञानजन्यभावनाया अपरोक्षज्ञानजनकत्वासंभवात् । न हि वह्न्यनुमितिज्ञानं सहस्रकृत्व आवृत्तमपि वह्निसाक्षात्काराय कल्पते । क्लृप्तप्रमाणसामग्रीमन्तरेण जायमानस्यैव ज्ञानस्याऽप्रामाण्यनियमात् । अन्यथा चैत्यं वन्देत स्वर्गकाम इत्यादिपौरुषेयवाक्यानामपि विषयबाधाभावादप्रामाण्यं न स्यात् । न हि चैत्यवन्दनं स्वर्गसाधनं भवतीत्यत्र(२)किञ्चिन्मानमस्ति अलौकिकहिताहितसाधनताया वै(३)दिकमेयत्वात्, तत्र मानान्तराप्र(४)सङ्गात्, पुरुषवचसां च मानान्तरमूलत्वेनैव प्रामाण्यात् । तत्र मूलाभावादे(५)वाप्रामाण्यं, पुरुषस्य भ्रमप्रमादा(६)दिसम्भवादिति चेत्, प्रकृतेऽपि तुल्यं भाव(७)नायाः ।

न चात्र शब्दप्रमाणस्य मूलत्वान्नामूलतेति वाच्यम्, संवादात्प्रामाण्याङ्गीकारे पूर्वतन्त्रोपपादि-

---

(१) B reads दुष्टकारणजन्यमप्रामाण्यप्रयोजकमुक्तम् ।

(२) B omits किंचित् । (३) A reads वैदिकम ।

(४) B reads राप्रसरात् । (५) B omits एव ।

(६) आदि is omitted by B. (७) B does not read भावनायाः ।

ततत्स्वतस्त्वभङ्गप्रसङ्गात् । आवश्यकत्वेन शब्दस्यैवात्र प्रामाण्यस्योचितत्वाच्च । अन्यत्रादृष्टमपि फलान्यथानुपपत्याऽत्रैव प्रामाण्यं कल्प्यत इति चेन्न । अपूर्वप्रमाणान्तरकल्पने मानाभावात् फलस्य च १ क्लृप्तप्रमाणेनैवोपपत्तेः । परोक्षभावनाया अपरोक्षविषयत्वं तस्याः प्रमाणान्तरत्वं चान्यत्रादृष्टचरमपि त्वया कल्पनीयम् । तदुभयकल्पनाद्वरं क्लृप्तप्रामाण्यस्य शब्दस्यैवापरोक्षविषयत्वमात्रकल्पनम् । धर्मिकल्पनातो धर्मकल्पनाया लघुत्वात् ।

अस्तु तर्हि मन एवात्र प्रमाणम् । तत्किं भावनासहकृतं केवलं वा ? आद्ये पूर्वोक्त एव दोषः । यदसाधारणं कारणमासाद्य मनः प्रमां जनयति तस्य प्रमाणान्तरत्वनियमात् । अन्यथा चक्षुरादिव्याप्तिज्ञानादिसहकृतस्य मनस एव सर्वत्र प्रामाण्यसम्भवे प्रमाणान्तरोच्छेदापत्तेः । चक्षुरादीनामेव सर्वत्राऽसाधारण्यात्प्रामाण्यमित्यभ्युपगमे भावनाया अपि तत्तुल्यम् । न द्वितीयः—वेदान्तवाक्यश्रवणात्पूर्वमपि केवलमनसो विद्यमानत्वेन ब्रह्मणश्च स(२)दा संनिहितत्वेन साक्षात्कारः स्यात् । तथा च श्रवणमननिदिध्यासनादिसाधनानामान-

(१) च and क्लप्त are omitted by B.
(२) B reads सर्वदा

र्थक्येन तत्प्रतिपादकचतुर्लक्षणीमीमांसारम्भो न स्यात् । किंच(१) भावनासापेक्षत्वे शब्दस्याप्रामाण्य-प्रसङ्गः । शब्दप्रमात्वावच्छिन्नकार्यतानिरूपितकारण-तानावभयसापेक्षत्वं ह्यप्रामाण्यप्रयोजकम्, चक्षुरा-दावपि तादृशमेवाप्रामाण्यम् ।

किञ्च, तस्य प्रमा(२)णानुग्राहकत्वेन तर्कालो-कादिवन्न प्रमाणान्तर(३)त्वं सम्भवति, असाधारण-विषयाभावात् सिद्धान्ते सुखदुःखेच्छादीनां मनोध-र्माणां करणव्यवधानाभावेनैव साक्षिवेद्यत्वाभ्युपग-मात् न च ब्रह्मैवासाधारणो विषयो मनस इति "य मनसा न मनुते" इत्यादिश्रुतिविरोधात् ।

ननु "यद्वाचानभ्युदितं"—"न चक्षुषा गृह्य-ते नापि वाचा" "यतो वाचो निवर्त्तन्ते" इत्यादिश्रुतिविरोधः सिद्धान्तेऽपि सम इति चेत्, "नावेदविन्मनुते तं बृहन्तम् । वेदेनैव यद्वेदि-तव्यम्" "तत्त्वौपनिषदं पुरुषं पृच्छामि" इत्यादिश्रुतिबलेन निषेधश्रुतीनां मुख्यवृत्त्यविषयत्वे-नाप्युपपत्तेः । मनसि च मुख्यामुख्यभेदाभावात् ।

(१) This reading between स्यात् and किंच is not given by A.

(२) B reads प्रमाणानुग्रहत्वेनालोकादि ।

(३) B reads न्तरता ।

"सर्वे वेदा यत्रै(१)कंभवन्ति" "स मानसीन आत्मा" "मनसैवानुद्रष्टव्यम्" इत्यादि(२)श्रुतेः का गतिरिति चेत् (३), शृणु। मानसीनत्वं मनस्युपाधावुपलभ्यमानत्वं न मनोजन्यसाक्षात्कारविषयत्वम्। मनसैवेति तु कर्त्तरि तृतीया आत्मनोऽकर्तृत्वप्रतिपादनार्था मनसो दर्शनकर्तृत्व(४)माह न करणताम्। औपनिषदसमाख्याविरोधात्। असाधारणेन हि व्यपदेशा भवन्ति, व्यवहारे मानसीनसमाख्यानवत्।

अत एव प्रमाश्रयत्वादपि न मनसस्तत्र कारणतावकाशः, "कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव" इति श्रुतौ मृ(५)द्घट इतिवदुपादानकारणत्वेन मनःसामानाधिकरण्यप्रतिपादनात्। दण्डो घट इत्यादिसामानाधिकरण्यादर्शनेन निमित्तकारणत्वाभ्युपगमेऽनुपपत्तिः। निमित्तकारणताग्रहणार्थमवश्यकल्प्ययोरन्वयव्यतिरेकयोः समवायिकारणविषयत्वस्यैवोचितत्वात्समवायिकारणान्तरोपस्थित्यभावात्। आत्मनश्च "साक्षी चेता केवलो निर्गुणश्च"

(१) B reads यत्रैके। (२) आदि is omitted by B.
(३) चेत is omitted by A. (४)B reads कर्तृता।
(५) B reads मृद्घटवदुपा।

इतिश्रुत्या निर्गुणत्व(१)प्रतिपादनात्। दृश्यानां द्रष्टृधर्मत्वानुपपत्तेश्च(२)दृश्यानां घटादीनां स्वरूपतो धर्मत्वेन वा तादात्म्याभावस्य सर्वसिद्धत्वात्, कामसंकल्पादीनां च स्वप्रकाशत्वाभावेन दृश्यत्वात् द्रष्टृधर्मत्वाभावनिश्चये, "मनसैवानुद्रष्टव्यम्" "यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः" "तीर्णो हि तदा सर्वान् शो(३)कान् हृदयस्य भवति" इत्यादिश्रुतिभिर्मनोधर्मत्वमेव कामादीनां निश्चीयते। मनस्तादात्म्याध्यासाच्च तद्धर्माणामप्यात्मन्याध्यासिको व्यवहारः। "बुद्धेर्गुणेनात्मगुणेन चैव" "आराग्रमात्रो ह्यवरोऽपि दृष्टः" "स समानः सन्नुभौ लोकावनुसंचरति ध्यायतीव" "सधीःस्वप्नो भूत्वेमं लोकमतिक्रामति" इत्यादिश्रुतिभ्यः। "विविज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च" इतिश्रुतौ ज्ञानशब्दवाच्यस्य मनस एव प्रथमान्तपदनिर्देश्यत्वे कर्तृत्वश्रवणाच्च। "मनसा ह्येव पश्यति मनसा शृणोति" इत्यादौ करणत्वमपि श्रुतमिति चेत्, न, इन्द्रियातिरिक्ते मनसि विप्रतिपन्नान्प्रति तदतिरिक्तमनःसद्भावमात्रे तस्याः श्रुतेस्तात्पर्यात्, न तु करणत्वेऽपि, एवकाराऽनन्वयापत्तेः, चक्षुरादीनामपि करणत्व-

(१) B reads ता। (२) A omits च।
(३) B reads कामान्।

स्यान्वयव्यतिरेकसिद्धत्वेन तद्व्यवच्छेदेन नियमानुपपत्तेः, हेतुमात्रेऽपि तृतीयास्मरणात् । मनसः करणताप्रसिद्धिस्तु निर्धर्मकस्वप्रकाशस्यात्मनोऽसङ्गस्य स्वतो विषयोपलम्भायोग्यस्य स्वतादात्म्याध्यासेन तदाकारवृत्तिभिर्विषयोपलम्भद्वारत्वादेव, न तु चक्षुरादिव(१)द्दूरस्थत्वेनेत्यास्तां तावत् । स्वप्रकाशप्रक्रियायां विस्तरेणैतदुपपादयिष्यामः ।

अस्तु तर्हि प्रथमं परोक्षं ज्ञानं जनयतोऽपि शब्दस्यैव सहकारिविशेषलाभेन पश्चादपरोक्षज्ञानजनकत्वमिति, तन्न, अर्द्धजरतीयन्यायापातात् । शब्दस्य परोक्षज्ञानजनन(२)स्वाभाव्ये सहकारिसहस्रेणापि तद(३)पाकरणायोगात्, आ(४)गन्तुकस्य स्वभावत्वानुपपत्तेः ।

यत्तु दृष्टान्तत्वेन प्रत्यभिज्ञानमुदाहृतं तत्र किं विवक्षितम् । अपरोक्षज्ञानजनकस्वभावस्य चक्षुषः संस्कारसहकारेणासंनिकृष्टेऽपि तत्तांशेऽपरोक्षज्ञानजनकत्वम् किं वा संस्कारनिरपेक्षत्वेन ज्ञानं

---

(१) B reads वत्तटस्थत्वेन । (२) A reads जनक ।
(३) B reads तदन्यथाकरणा । (४) A reads आगन्तुकस्वभावानुपपत्तेः ।

जनयतोऽपि चक्षुषः संस्कारसापेक्षत्वेऽपि नाप्रामाण्यमिति ।

तत्र नाद्यः । प्रत्यभिज्ञाया अपरोक्षत्वात्, तत्तांशे चक्षुषोऽजनकत्वाच्च ।

अत एव न द्वितीयोऽपि, तत्तांशेऽपरोक्षत्वानङ्गीकारात्, तदंशे संस्कारमात्रजन्यत्वेन स्मृतित्वस्यैवाभ्युपगमाच्च(१) । एतेन प्रत्यभिज्ञायाः संस्कारजन्यत्वे स्मृतित्वापातात् संस्कारजस्मरणमेव विशेषज्ञानत्वेन तत्कारणमित्यपास्तम्, संस्कारजन्यत्वांशे स्मरणत्वाङ्गीकारात्स्मृतिहेतुत्वेनावश्यकल्प्योद्बुद्धसंस्कारादेव प्रत्य(२)भिज्ञानोत्पादसम्भवेऽन्तरा स्मृतिकल्पनानवकाशात्, 'तद्धेतोरेव तदस्तु किं तेन' इतिन्यायात्स्मरण इव प्रत्यभिज्ञायामपि पूर्वानुभवान्वयव्यतिरेकयोस्तुल्यत्वाच्च । प्रमात्वाप्रमात्ववदनुभवत्वस्मरणत्वयोरेकज्ञानवृत्तित्वे विषयकृतांशभेदान्न विरोधः । स्मृतित्वानुभवत्वयोर्जातित्वानङ्गीकारात् ।

अत एव न तृतीयः; न हि चक्षुषः स्वविषये संस्कारसापेक्षत्वमस्तियेन सापेक्षत्वलक्षणमप्रामाण्यं स्यात्, किन्तु स्वस्वसहकारिसमवधानात्स्वे स्वे विषये युगपज्ज्ञानं जनयतोश्चक्षुःसंस्कारयोरार्थसमाजेनानु-

(१) B omits च । (२) B reads प्रत्यभिज्ञात्पादकत्वसम्भवे ।

भवस्मरणात्मकैकज्ञानजनकत्वं पर्यवस्यति, अन्यथा संस्कारसहकारेण चक्षुषोऽसंनिकृष्टविषयेऽपि ज्ञानजनकत्वे रजतसंस्कारसहकारेणासंनिकृष्टेऽपि रजते चाक्षुषज्ञानापत्तेरन्यथाख्यातिस्वीकारप्रसङ्गः । रजतचाक्षुषत्वेन रजतसंयोगत्वेनैव कार्यकारणभावनियमे तद्देशकालसम्बन्धरूपायां तत्तायामपि तुल्यम्, प्रत्यक्षस्य विद्य(१)-मानोपलम्भत्वनियमात् । किन्तु भिन्नजातीयज्ञानहेतुत्वेन क्लृप्तयोरपि चक्षुःसंस्कारयोरन्वयव्यतिरेकाभ्यामेकज्ञानहेतुत्वं प्रत्यभिज्ञायां क्लृप्तम् । इदमेवान्यथाख्यातिवादनिराकरणेनानिर्वचनीयाख्यमिथ्याज्ञानोत्पत्तिं व्यवस्थापयद्भिः पञ्चपादिकाकारैर्दृष्टान्तितम् । नैतावता सापेक्षस्यापि प्रामाण्यं भविष्यति । इह च पूर्वमपरोक्षज्ञानासमर्थस्यैव शब्दस्य विचारजनितसंस्कारविशेषसहकारेणापरोक्षज्ञानजनने सापेक्षत्वलक्षणाप्रामाण्यस्वभावभङ्गयोः प्रसङ्गो(२)वज्रलेपायते। तस्माच्छब्द एव विचारात्पूर्वमूर्ध्वं च स्वतःप्रमाणभूतो विषयमहिम्ना साक्षात्कारं जनयतीति युक्तमाश्रयितुम् । न च स्वभावभङ्गदोषः, मनस इव परोक्षापरोक्षज्ञानजननस्वभावाङ्गीकारात् । यथा मनः क्वचि-

(१) B reads विद्यमानतोपलम्भत्व ।

(२) B reads भङ्गदोषप्रसङ्गः

त्परोक्षं ज्ञानं (१)जनयति कश्चिच्चापरोक्षमित्युपेयते परैस्तद्वदस्माकं शब्दे(२)ऽपि किं न स्यात् ।

ननु तत्रावच्छेदकद्वैविध्यमस्ति । मनस्त्वेन परोक्षज्ञानजनकता, इन्द्रियत्वेन चक्षुरादिवदसाधारणेनापरोक्षज्ञानजनकता । इन्द्रियत्वं च शब्देतरोद्भूतविशेषगुणाभावसमानाधिकरणज्ञानकारणमनःसंयोगाश्रयत्वम्, स्मृत्यजनकवृत्तिज्ञानकारणमनःसंयोगाश्रयत्वम् वा । ततश्चक्षुरादाविव मनस्यपि वर्तते । एवं शब्देऽपि द्वैरूप्यं वाच्यम् । एवं परोक्षज्ञानजनकतावच्छेदकमपरोक्षज्ञानजनकतावच्छेदकमिति ।

उच्यते । स्व(३)विषयाजन्यज्ञानजनकत्वेन वा, ज्ञानकरणत्वेन वा शब्दस्य परोक्षज्ञानजनकत्वं योग्यपदार्थनिरूपितत्वं पदार्थभेदपरशब्दत्वेनापरोक्षज्ञानजनकता । "धर्मस्त्वमसि"(४)इत्यादौ व्यभिचारवारणाय आद्यं विशेषणम्, इतरविशेषणव्यावर्त्यं तु स्पष्टम् । एतच्च दशमस्त्वमसि राजा त्वमसीतिवाक्याद् दशमोऽहमस्मि राजाहमस्मीत्यादिसाक्षात्कारदर्शनात्, अन्यथा नाहं दशमो नव-

(१) B reads जनयते ।

(२) B omits अपि ।

(३) स्व is omitted by A.

(४) B reads धार्मिकस्त्व ।

सोऽहमस्मि, नाहं राजा व्याध एवास्मीत्यादिसाक्षात्कारिभ्रमनिवृत्तिस्ततो न स्यात् । साक्षात्कारिभ्रमे साक्षात्कारिविरोधिज्ञानत्वेनैव विरोधित्वकल्पनात् ।

न च तत्र वाक्यात्पदार्थमात्रोपस्थितौ मानसः संसर्गबोध इति वाच्यम् । सर्वस्मिन्नपि वाक्ये तथा सम्भवेन श(१)ब्दप्रमाणमात्रोच्छेदापत्तेः, असाधारणमनःसहकारित्वेन पदार्थज्ञानस्य प्रमाणान्तरावश्यकत्वाच्च, यदसाधारणं कारणमिति(२)न्यायात् ।

अत एव वाक्यात्परोक्षज्ञानानन्तरं मानसज्ञानान्तरमेव भ्रमनिवर्तकमित्यपास्तम् । अन्वयव्यतिरेकाभ्यां तत्र वाक्यस्यैव कारणतावधारणात् । अन्यथा वाक्यश्रवणात् पूर्वमेव सामग्र्याः सम्भवेन मनसा चक्षुरादिना वा साक्षात्कारजननप्रसङ्गात् । वाक्यमपि तत्र सहकारीति(३)चेत् तर्ह्यायातं वाक्यस्यैव प्रामाण्यम्, मनसोऽसाधारणसहकारित्वात् । तस्माच्छब्द एव तत्र साक्षात्कारहेतुः । यथा च परोक्षत्वव्याप्यमेकं मानसत्वमपरोक्षत्वव्याप्यमपरमि(४)न्द्रियत्वम्, तद्वच्छाब्दत्वमपि द्विविधं, तेन न सांकर्यप्रसङ्गः ।

---

(१) B reads शाब्दप्र ।

(२) B reads आदि after इति । (३) B omits इति ।

(४) इन्द्रियत्वम् is not read by A.

नन्वेवं विशेषरूपेण कारणतासम्भवेऽपि चक्षुरादीनां षण्णां चक्षुष्ट्वादिविशेषकारणतावच्छेदकावच्छिन्नानां यथा सामान्यकारणतावच्छेदकमपरमिन्द्रियत्वमिष्टम्, एवं शब्देऽपि सामान्यकारणतावच्छेदकं षडिन्द्रियानुगतं वक्तव्यम् । अन्यथा शब्दजन्ये ज्ञानेऽपरोक्षसामान्यमाकस्मिकं स्यात्, शब्दे तत्प्रयोजकाभावात् । तथा च व्यापका(१)भावे तद्व्याप्यशब्दापरोक्षमपि न स्यात्, चाक्षुषत्वादिवत् ।

उच्यते, परोक्षत्वानधिकरणज्ञानकरणत्वमेव सप्तस्वनुगतमपरोक्षज्ञानजनकतावच्छेदकं तव षट्स्वनुगतमिन्द्रियत्वमिव, विशेषज्ञानकारणतायाः सामान्यकारणतावच्छेदकत्वं तव मम च समानम् । अन्यथा सामान्यरूपेणेन्द्रियाणां कारणत्वाऽसिद्ध्या ज्ञानजनकमनःसंयोगविशेषाश्रयत्वेन कारणता न स्यात् । तेन चक्षुष्ट्वादिविशेषरूपेण गृहीतकारणतानामिव चक्षुरादीनां केनचिदुपाधिनैवोक्तिः शब्देऽपि न व्याहन्यते ।

न चैवं शब्देऽपीन्द्रियव्यवहारापत्तिः प्रत्यक्षज्ञानकारणतावच्छेदकस्यैवेन्द्रियव्यवहारहेतुत्वादिति वाच्यम् । इन्द्रियाणामतीन्द्रियत्वेन तत्र लौकिकानां प्रत्यक्षव्यवहाराभावात् । परीक्षकाणां च स्वस्वपरिभाषया व्यवहारात् । अश्रावणत्वविशेषेऽपि तस्योक्तरूपस्य वा

(१) B reads व्यापकाभावेन ।

वहारप्रयोजकत्वाङ्गीकारान्न दोषः। किं चोक्तं रूपं नेन्द्रियव्यवहारहेतुः, कर्मेन्द्रियपञ्चकाव्यापनात्। न तेषु मानाभावः "दशेमे पुरुषे प्राणा आत्मैकादश" इत्यादिश्रुतिस्मृतिशतैः प्रतिपाद्यमानत्वात्, वचनादानगमनविसर्गानन्दाख्यकार्यपञ्चकान्यथानुपपत्तेश्च। तथा चाविरोधलक्षणे चतुर्थपादे व्युत्पादितं भगवता सूत्रकारेण "नेन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात्" इति।

सांख्यैरप्युक्तम्, "अभिमानोऽहंकारस्तस्माद् द्विविधः प्रवर्तते सर्गः। ऐन्द्रिय एकादशकश्च गणस्तन्मात्रपञ्चकं चैव॥ सात्त्विक एकादशकः प्रवर्त्तते वैकृतादहंकारात्। भूतादेस्तन्मात्रः स तामसस्तैजसादुभयम्। बुद्धीन्द्रियाणि चक्षुःश्रोत्रघ्राणरसनत्वगाख्यानि। वाक्पाणिपादपायूपस्थान् कर्मेन्द्रियाण्याहुः" इति। अस्यार्थः प्रकृतेः प्रथमकार्यभूतात् महासत्तासामान्यात्मकान्महतोऽहंकारो नाम पदार्थो जात इत्युक्तम् "प्रकृतेर्महांस्ततोऽहंकारः" इत्यत्र। अधुनाऽहंकारस्य लक्षणमुच्यते—अभिमान इन्द्रियोपनीतेऽर्थेऽहमत्राधिकृतः शक्तः खल्वहं मदर्था एवामी विषया मत्तो नान्योऽ(१)

(१) B reads नान्योऽस्त्राधि।

धिकृतः कश्चिदत्तोऽहमस्मीति योऽभिमानः सोऽहं-का(१)रव्यापारत्वादहंकारस्य लक्षणम् । तेनाभिमान-हेतुरहंकारः । सामानाधिकरण्यं च कार्यकारणयो-स्तादात्म्यविवक्षया । स च त्रिविधो भवति, कारणी-भूतगुणत्रयभेदात्सात्त्विको राजसस्तामसश्च । सा-त्त्विक एव वैकृतवैकारिकश(२)ब्दाभ्यामुच्यते, राजस एव तैजसशब्देनोच्यते, तामसो भूतादिशब्देन । ततश्च सात्त्वि(३)कादहंकारादेकादशेन्द्रियसर्गः, यस्मा-त्स लघुः प्रकाशकश्च । तामसादहंकाराच्छब्दस्पर्श-रूपरसगन्धाख्यपञ्चतन्मात्रवर्गः, यस्मात्स तामसः गुरुत्वादावरणात्मकत्वाच्च । राजसस्य तु स्वतन्त्र-कार्याभावादुभयसहकारित्वमात्रं स्वतो निश्चलयोः सत्त्वतमसोः स्वकार्यं प्रति चालकत्वाद्रजसः । "सत्त्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलं च रजः । गुरु चावरणकमेव तमः" इत्युक्तत्वात् । कारणानुवि-धायि च कार्यम् । ए(४)षां च परस्परविरोधिनामप्येक-कार्यकारित्वं न विहन्यते, तैलवर्तिवह्निषु परस्परवि-रुद्धत्वेऽप्येकप्रकाशाख्यकार्यदर्शनात् । तथोक्तं "प्र-दीपवच्चार्थतो वृत्तिः," तस्मादेष विभागः । तत्र

---

(१) B हंकारस्य । (२) B omits शब्द ।

(३) B reads सात्त्विकाद् । (४) A reads एवं च ।

सात्त्विकाहंकारोपादानकत्वमिन्द्रियत्वं त(१)न्नये इ-न्द्रियसामान्यवृत्त्यतिरिक्तप्राणानङ्गीकारान्न तत्राति-व्याप्तिः। "सामान्यकरणवृत्तिः प्राणाद्या वाय-वः पञ्च" इत्युक्तत्वात्। तन्मात्राणां भूतानां च ता-मसाहंकारकार्यत्वात्।

ननु सिद्धान्ते "अन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वाणी"(२)इति श्रुतौ भौतिकाहारोपष्टम्भ्यत्वश्रवणात्समानजातीय(३)त्वे च तत्संभवान्मृन्मयमित्यादेरेव मृदन्तरेणोपष्टम्भदर्शनाद् "अग्निं वागप्येति चक्षुरादित्यं दिशः श्रोत्रम्" इति च भूतेषु लयश्रवणाल्लयस्य चाकारणेऽनुपपत्ते-र्भूतगुणव्यञ्जकत्वे चालोकादिवद्भौतिकत्वमिन्द्रि-याणां सिद्धम्। यथा च श्रोत्रत्वक्चक्षूरसनघ्राणानां शब्दस्पर्शरूपरसगन्धग्राहकत्वादेकैकशस्तु त(४)त्तद्गु-णवत्त्वम्। तथा पञ्चगुणग्राहकत्वान्मनसोऽपि पञ्चगु-णवत्त्वम्, यदिन्द्रियं यद्गुणग्राहकं तदिन्द्रियं तद्गुण-वदिति व्याप्तेः। तथा च मनसः पञ्चभूतात्मकत्वम-न्येषां चैकैकभूतात्मकत्वं पर्यवस्यति।

न च मनसः स्पर्शवत्त्वेनारम्भकत्वप्रसङ्गः, चक्षु-रादितुल्यत्वाभ्युपगमात् आरम्भवादानङ्गीकाराच्च।

(१) B reads तत्र। (२) B reads वाग्।

(३) B reads समानजातीयेषु तत्सं।

(४) B reads तद्वत्त्वं।

न च सर्वविशेषगुणशून्ये परमाणावभौतिके किञ्चन मानमस्ति,(१)तत्साधकानुमानानामाभासत्वात्, अहं-प्रत्ययेन च स्वप्रकाशकेवलात्मगोचरेण सर्वदेहव्यापि-त्वेनैव तस्य ग्रहात् । एतच्च सर्वमुक्तं वार्त्तिके "स्वग्राह्यार्थसजातीयमिन्द्रियं स्यात्प्रदीपवत् । रूपस्यैवावभा(२)सत्वान्न चेत्स्याच्छ्रोत्ररूपवत् । न चेदर्थसजातीयं सर्वार्थग्रहणं भवेत् । ए-कैकस्येन्द्रियस्येह मनोबुद्धयोर्यथा तथा । स-र्वभूतात्मकत्वात्तु सर्वार्थग्रहणं तयोः । मनो-बुद्धयोरिति ज्ञेयमन्यथा तदसंभवात् । रस-गादिज्ञानशक्ती(३)नां बुद्धिः सामान्यमिष्यते । प्राण एव क्रियाश(४)क्तिः सामान्यं तदुच्य-ते । शब्दादिभोगसिद्धयर्थं श्रोत्राद्या ज्ञानश-क्तयः । तद्वत्कर्मोपभोगार्थं वागाद्याः कर्मशक्तयः" इति । "यावद्रुधिरसंव्याप्तिः शरीरे तावदेव तु । बुद्धेः(५)सामान्यवृत्तेस्तद्व्याप्तिरादेहसंक्ष-यात् । योग्येन्द्रियस्य या यस्य ततोऽन्यत्रापि लक्षिता । वृत्तिस्तस्यैव सा ज्ञेया न स्वभाव-

(१) तत्साधकानुमानानांमाभासत्वात् । this reading is omited by B. (२) B reads व्जभास्तित्वा ।
(३) B reads व्यक्तीनां । (४) B reads शक्तिसामान्य ।
(५ B reads बुद्धेः सामान्यवृत्तिः स्याद्व्याप्ति ।

विपर्ययः" इत्यादि च। अत्र मनोबुद्ध्योरित्येक-स्यैव संकल्पाध्यवसायलक्षणवृत्तिभेदाद् द्वैविध्याभि-धानम्। चक्षुःश्रवसां चक्षुषा श्र(१)वणदर्शनात् पूर्वो-क्तव्याप्तिभङ्गमाशङ्कयोक्तं योग्येति। तत्रैकस्मिन्न-पि गोलके स्वस्वकार्यसमर्थमिन्द्रियद्वयमङ्गीक्रियत इ-त्यर्थः। ज्ञानेन्द्रियकर्मेन्द्रिययोश्च ज्ञानक्रियाशक्तिभे-देन २ वैलक्षण्यमुक्तम्। तथा चैकादशस्वनुगतं किंल-क्षणमिन्द्रियं व्यवहारोपपादकं? सात्त्विकाहंकारोपा-दानत्वलक्षणत्वस्य भवद्भिरनङ्गीकारादिति।

उच्यते, प्राणेतरत्वे सत्यपञ्चीकृतभूतोपादानक-त्वमेव सामान्यत इन्द्रियलक्षणम्। "अन्यत्र श्रेष्ठा-त्" इति सूत्रे(३)ण प्राणस्येन्द्रियत्वानङ्गीकारादिति आ(४)द्यं विशेषणम्। शब्दस्पर्शरूपरसगन्धानां च पञ्चीकृतभूतस्वरूपत्वादेव न तदुपादानकत्वम्। तत्र सत्त्वांशप्रधानाऽपञ्चीकृतपञ्चमहाभूतकार्यमन्तःकरणम्। तद् वृत्तिभेदाद् द्विधाख्या(५)यते बुद्धिर्मनश्चेति। रजों-शप्रधानाऽपञ्चीकृतपञ्चमहाभूतकार्यं प्राणः। स च वृत्ति-भेदात्पञ्चधाख्यायते प्राणोऽपानो व्यान उदानः

(१) B reads शब्दश्रवण। (२) B reads भेदेनैव वैलक्षण्य।
(३) A reads सूत्रेऽस्य प्राणस्य।
(४) B reads आद्य।
(५) B reads व्याख्यायते।

स्मान इति । प्राणमनसोरेकात्मकत्वाङ्गीक(१)रणपक्षे-ऽपि नैतादृशविभागे विवादः, ज्ञानशक्तिक्रियाशक्ति-शब्दाभ्यां सत्त्वरजसोरेवाभिधानात् । एवं सत्त्वप्रधाना-पञ्चीकृताकाशकार्यं श्रोत्रं तदपि चक्षुरादिवद् गत्वैव ग्राहकं दूरे शब्द इत्यादिप्रत्ययात्, न तु तार्किक-वन्नित्यमाकाशमस्माकम् । एवं तादृशवायुकार्यं त्वक् । तादृशतेजःकार्यं चक्षुः । तादृशाप्(२)कार्यं रसनम् । ता-दृशपृथिवीकार्यं घ्राणम् । सत्त्वस्य प्रकाशकत्वात् तत्त-त्कार्याणां ज्ञानेन्द्रियत्वम् । एवं किञ्चिद्रजोमिश्रितस-त्त्वप्रधानादपञ्चीकृताकाशादुत्पन्नमिन्द्रियं वाक् । त-स्यां च शब्दव्यञ्जकेन्द्रियत्वेन श्रोत्रवदाकाशज-त्वमेव ।

केचित्तेजोमयी वागित्यादिश्रुतिदर्शनेन वाच-स्तैजसत्वमाहुः । तन्न, तत्र तेजःशब्दस्य घृतादिस्नि-ग्धपार्थिवद्रव्यवाचकत्वात्, 'तेजोऽशितं त्रेधा वि-धीयते' इत्युपक्रमात्, 'तेजो वै घृतम्' इति श्रुत्य-न्तरात्तेजोभूतस्याशितुमशक्यत्वाच्च, 'अन्नमयं हि सोम्य मनः' इत्यत्रापि मनसः केवलपार्थिवत्वाङ्गी-कारापाताच्च ।

तस्मादस्मदुक्तमेव साधु । एवं तादृशवायुकार्यं हस्तेन्द्रियम्, आदानादिक्रियाया वाय्वात्मकत्वात् । “त्रयं वा इदं नामरूपं कर्म” इति श्रुतौ प्राणस्य

---

(१) B reads ङ्गीकारपक्षे । (२) B reads तादृशजलकार्यं ।

कफात्मकत्वाभिधानात् । प्राणवायोश्च संवर्गविद्यादिषु तादात्म्योपदेशात् । तादृशतेजःकार्यं पादेन्द्रियं पादचिकित्सायाश्चक्षुरारोग्य(१)त्वेन विहितत्वात्तयोरेकजातीयत्वम् । तादृशाप्कार्यं पाय्विन्द्रियं स्निग्धत्वात् । तादृक्पृथिवीकार्यमुपस्थेन्द्रियं कठिनत्वात् । विस्तरेणैतत्प्रपञ्चितमस्माभिः सिद्धान्तबिन्दौ । पञ्चदशप्रकरण्यां चायं क्रमः सर्वोऽप्यभिहितः “वियत्पवनतेजोऽम्बुभुवो भूतानि जज्ञिरे । सत्त्वांशैः पञ्चभिस्तेषां क्रमाद्धीन्द्रियपञ्चकम् । श्रोत्रत्वगक्षिरसनघ्राणाख्यमुपजायते । तैरन्तःकरणं सर्वैर्वृत्तिभेदेन तद् द्विधा । मनोविकल्परूपं स्याद् बुद्धिः स्यान्निश्चयात्मिका । रजोंऽशैः पञ्चभिस्तेषां क्रमात्कर्मेन्द्रियाणि तु । वाक्पाणिपादपायूपस्थाभिधानानि जज्ञिरे । तैः सर्वैः सहितः प्राणो वृत्तिभेदात्स पञ्चधा” इति । तदेवमवान्तरभेदेऽपि अपञ्चीकृतभूतोपादानकत्वस्य सामान्यतस्तस्य सम्भवान्नास्माकं मते काचिदनुपपत्तिरित्यास्तां तावत् । तस्मान्नापरोक्षज्ञानकारणत्वेन शब्देऽपीन्द्रियव्यवहारापत्तिः ।

न चैवं शाब्दत्वस्य परोक्षत्वापरोक्षत्वाभ्यां

(१) B reads रारोग्यकरत्वेन ।

सांकर्यप्रसङ्ग इति वाच्यम्, उपाधिसांकर्य्यवद् जातिसांकर्य्यस्यापि अदूषकत्वात्, परोक्षत्वापरोक्षत्वयोरेकज्ञानवृत्तित्वेन प्रमात्वाप्रमात्ववज्जातित्वासम्भवाच्च कार्यतावच्छेदकत्वकारणतावच्छेदकत्वानन्यथासिद्धत्वानुगतप्रत्ययाभावेनापि जात्यङ्गीकारेऽतिप्रसङ्गाच्च। न चेन्द्रियजन्यतावच्छेदकत्वेन परोक्षत्वजातिः सेत्स्यतीति वाच्यम्, तस्य तन्मते नित्येश्वरज्ञानवृत्तित्वेनास्मन्मते सुखादिभासकनित्यसाक्षिचैतन्यवृत्तित्वेन कार्य्यतावच्छेदकत्वात्। मीमांसकमते गुणगतजात्यनङ्गीकारात्। ईश्वरज्ञानस्य चापरोक्षत्वानङ्गीकारे तत्सिद्धिरेव न स्यात्, क्षित्याद्युपादानगोचरापरोक्षज्ञानवत्त्वेनैव तदनुमानात्। न च जन्यप्रत्यक्षत्वं जातिरस्तु तत्र बाधकाभावादिति वाच्यम्। अस्तु वा माऽस्तु तत्र का नो हानिः, प्रत्यक्षत्वन्तु नित्यज्ञानसाधारणं न जातिरित्युक्तम्।

ननु तवापि अर्थनिष्ठमपरोक्षत्वं दुर्निरूपम्। तथा हि–न तावदपरोक्षज्ञानविषयत्वम्, अन्योन्याश्रयात्, ज्ञानापरोक्षत्वस्याद्याप्यसिद्धत्वाच्च। नापि "यत्साक्षादपरोक्षाद् ब्रह्म" इति श्रुतिप्रतिपादितं स्वप्रकाशचैतन्यरूपत्वम्। वस्तुगत्यां तद्रूपत्वविवक्षायां सर्वेषामेव पदार्थानां वस्तुतस्तद्रूपतयाऽपरोक्षता-

प्रसङ्गात्, वास्तवापरोक्षतायाश्च व्यवहारेऽप्रयोजक-त्वात्, अकल्पिततादृशस्वरूपत्वाभ्युपगमे च दशम-स्त्वमसीत्यादौ तदभावात् । नापि संविदभिन्नत्वेन भासमानत्वम्, घटादौ तदभावेन परोक्षताप्रसङ्गात् । न च चैतन्यसत्तयैव सत्तेव चैतन्यापरोक्षतयाऽपरोक्ष-तापि घटादीनामिति वाच्यम्, चैतन्यापरोक्षताया एव स्वरूपातिरिक्ताया अनिरूपणात् । स्वरूपमात्रेण तदङ्गीकारे च सर्वत्र सत्ताव्यवहारवदपरोक्षव्यवहा-रोऽपि स्यात् ।

ननु निवृत्ताज्ञानत्वमेव चैतन्यस्यापरोक्षत्वम्, तच्च क्वचित्स्वत एव सुखादिसाक्षात्कारे, क्वचिच्च मान-जन्यवृत्तिविशेषेण यथा घटादिसाक्षात्कार इति ना-तिप्रसङ्ग इति चेत् । एतावता हि निवृत्तिताज्ञानचै-तन्यस्वरूपाभिन्नत्वेन भासमानो विषयः स्वगोचरज्ञा-नेऽपरोक्षत्वमादधातीति फलितोऽर्थः, तथा सति तद्-गोचरज्ञानस्य वैयर्थ्यमेव तत्फलस्य फलम्, पूर्वमेव जातत्वात् । आवृतविषयस्य वा मानजज्ञानमन्तरेण कथं निवृत्ताज्ञानत्वम् । मानं स्वयमपरोक्षतारहितमु-त्पन्नविषयस्याज्ञानं निवर्त्य पश्चात्तादृशस्वरूपवि-षयत्वेनापरोक्षतां लभत इत्यपूर्वपाण्डित्यं प्रकटयन्ननु-मानादिकं कथमेवं पृष्टः किं व्याचष्टाम् । आस्तिकः सन् स्वभाव एवायमिति कथं ब्रूयात् । तस्माद्वृत्तीनां

यदज्ञाननिवर्तकतावच्छेदकं रूपं तदेवापरोक्षत्वमिह प्रस्तुतम् । तच्च न चैतन्यस्य वास्तवापरोक्षत्वलभ्यमिति तत्र हेत्वन्तरं वाच्यमेव । अत एवापरोक्षपदार्थाभेदशब्दत्वेनापरोक्षज्ञानजनकत्वमित्यपास्तम्, वास्तवापरोक्षस्वरूपविषयत्वस्य तत्त्वमस्यादिवाक्ये सम्भवेऽपि दशमस्त्वमसीत्यादावसंभवात् निवृत्ताज्ञानस्य च शाब्दबोधात्पूर्वमभावात्, यदा कदाचिन्निवृत्ताज्ञानत्वविवक्षायां च पर्वतो वह्निमानित्यादिवाक्यानामप्यपरोक्षस्वरूपविषयतयाऽपरोक्षज्ञानजनकत्वापातात् । "यतो वा इमानि भूतानि जायन्ते" "सत्यं ज्ञानमनन्तम्" इत्यादिवाक्यानामप्यपरोक्षस्वरूपविषयतयाऽपरोक्षज्ञानजनकत्वेन महावाक्यवैयर्थ्यापाताच्च न च प्रमात्रभेदविषयत्वेनापरोक्षज्ञानजनकत्वं, सर्वज्ञत्वादिविशिष्टोऽसीत्यादिवाक्यादपि तथा प्रसङ्गात् । ईश्वरो मदभिन्नः चेतनत्वात् मद्वत्, इत्यनुमानादपि तथा प्रसङ्गाच्च । तस्मादस्मदुक्तमेव साधु, योग्यपदार्थनिरूपितत्वंपदार्थाभेदपरशब्दत्वेनापरोक्षज्ञानजनकतेति ।

न चैवं सति विचारात्पूर्वमपि शब्दस्यापरोक्षज्ञानजनकत्वसम्भवे तेनैवाज्ञानतत्कार्यनिवृत्त्युपपत्तौ किं विचारेणेति वाच्यम्, तस्यासंभावनादिप्रतिबद्धत्वेन तदानीं स्वकार्याजनकत्वात् । विचारेण तु प्रति-

बन्धनिवृत्तौ शब्दजन्यस्य निर्विकल्पापरोक्षज्ञानस्या-प्रतिबद्धत्वेन स्वकार्यजनकत्वात् । तत्रायं क्रमः—फलपर्यन्तं ब्रह्मविद्योपदेशेन विहितयज्ञाद्यनुष्ठानान्नित्यानित्यविवेकप्रतिबन्धकश्चित्तदोषः प्रतिहन्यते । ततो नित्यानित्यविवेकेन ऐहिकामुष्मिकवैतृष्ण्यप्रतिबन्धकश्चित्तदोषोऽपसार्यते । ततो विषयवैतृष्ण्येन शमदमादिप्रतिबन्धकश्चित्तदोषः । ततः शमादिभिर्विपरीतप्रवृत्तिहेतुश्चित्तदोषः । ततोऽद्वितीयब्रह्मैक्यविषयवेदान्तशक्तितात्पर्यनिश्चयफलकेन श्रवणाख्यतर्केण क्रियार्थत्वादिभिर्हेत्वाभासैर्वाऽद्वितीयब्रह्मात्मैक्ये वेदान्तानां प्रामाण्यासम्भवरूपश्चित्तदोषः । एवं वेदान्तानां प्रामाण्यासम्भावनाप्रचयहेतुभूतचित्तैकाग्र्यप्रतिबन्धकश्चित्तदोषः प्रमेयसम्भावनाफलकेन मननाख्यतर्केण । ततोऽन्यानुपरक्तब्रह्मात्मैक्यविषयसंस्कारप्रचयहेतुज्ञानवृत्तिफलकेन प्रयत्नेन निदिध्यासनाख्येनानादिप्रवृत्तदेहात्मज्ञानजनितसंस्कारप्रचयचित्तदोषोऽपसार्यते । ततोऽशेषदोषशून्ये स्थिरे स्वभावस्वच्छचित्तदर्पणे पूर्ववदेव वेदान्तवाक्येन जनिता अखण्डवाक्यार्थविषया या वृत्तिः सर्वदोषरहितत्वादप्रतिबद्धा स्वतः प्रामाण्यादेव कृत्स्नमज्ञानतत्कार्यं निवर्तयति ततः परं न शङ्कानवोत्तरम् ।

तदुक्तम् "पुरुषापराधमलिना धिषणा निरवद्य-चक्षुरुदयापि यथा। न फलाय भर्तुविषया भवति श्रुतिसम्भवापि तु तथात्मनि धीः॥ पुरुषापराधविगमे तु पुनः प्रतिबन्धकव्युदसनात्सफला मणिमन्त्रयोरपगमे यथा सति पावकाद् भवति धूमलता॥ पुरुषापराधविनिवृत्तिफलः सकलो विचार इति वेदविदः। अनपेक्षतामनुरुध्य गिरः फलवद् भवेत्प्रकरणं तद्तः" इत्यादि।

तस्मादद्वितीयब्रह्मात्मैक्यबोधस्यापरोक्षस्य स्वतः प्रमाणस्यापि बलवद्भिर्दोषैः परोक्षतामिवाप्राप्तामिवापाद्याविद्यानिवर्तकत्वमभिभूतम्। विचारेण तु दोषापगम एव केवलं क्रियते, न किञ्चिदाधीयते, तेन न स्वतःप्रामाण्यभङ्गप्रसङ्गः। तस्माच्छमादिसम्पन्नेन परिव्राजकेन मुमुक्षुणा गुरुमुपाश्रित्य चतुर्लक्षणमीमांसया विचार एवानुष्ठेयः फलपर्यन्तमिति विचारमेव विभज्य प्रदर्शयामः। तत्सिद्धमात्मैवाविद्यानिवृत्त्युपलक्षितो मोक्षः। तत्साधनं च वेदान्तवाक्यकरणकोऽन्यानुपरक्तब्रह्मात्मैक्यसाक्षात्कार एव श्रवणाद्युपनीतप्रतिबन्धः सन्निति सर्वं समञ्जसम्।

न्यायैर्विद्धत्वदुष्टानिह कपिलकणादाक्षपादादिवादा-
नादायाऽदुष्टमेकं श्रुतिमितममृतद्वारमद्वैतवादम् ।
वेदान्तैकप्रमेयं परमसुखमयं ज्ञानमज्ञानशून्यं
मोक्षं व्याचक्षते यं कमपि सुकृतिनःसोऽ(१)हमेवास्मि पूर्णः

इति श्रीवेदान्तकल्पलतिकायां श्रीमत्परमहंसपरिव्राज-
काचार्यमधुसूदनसरस्वतीकृतायां सुसाधनाऽप-
वर्गनिरूपणं नाम स्तवकः ।

श्रीमद्गोपालकृष्णार्पणमस्तु

(१) The text reads स्ते, but I propose this reading.

श्रीः

# वेदान्तकल्पलतिकायामुद्धृतवाक्यानामकारादिक्रमेण सूचीपत्रम् ।


| प्रमाणप्रतीकम् | पृष्ठाङ्कः | पङ्क्त्यङ्कः | मूलग्रन्थः | तद्० नाङ्कः |
|---|---|---|---|---|
| | | ( अ ) | | |
| अग्निं वागप्येति० | ८३ | १० | छान्दोग्योपनिषद् | ३।२।१ |
| अज्ञानेनावृतं० | ६५ | १५ | भगवद्गीता | ५।१५ |
| अथातो ब्रह्मजिज्ञासा | ७ | ४ | ब्रह्मसूत्रम् | १।१।१ |
| अनृतेन हि प्रत्यूढाः० | ६५ | १३ | छान्दोग्यो० | ८।३।२ |
| अन्नमयं हि सोम्य० | ८३ | ६ | छान्दोग्यो० | ६।५।४ |
| अन्यत्र श्रेष्ठात् | ८६ / ८५ | १७ / ११ | ब्रह्मसूत्रम् | २।४।१७ |
| अभिधेयाविनाभूत० | ३९ | १७ | | |
| अभिमानोऽहंकारः० | ८१ | ९ | सांख्यकारिका—का० | २४-२६ |
| अविद्याया अविद्यात्वे० | ६७ | १५ | बृहदारण्यकोपनिषद् वार्त्तिकम्—कारिका | १८१ |
| अविद्यायाः परं पारं० | ६५ | ९ | प्रश्नोपनिषद् | ६।८ |
| अविनाशी वा० | ११ | १ | बृहदारण्यको० | ४।५।१४ |
| अशरीरं वाव० | १२ | १७ | छान्दोग्यो० | ८।१२।१ |
| अस्थूलमनणु० | ४७ | १४ | बृहदारण्यको० | ३।८।८ |
| | | ( आ ) | | |
| आकाशवत्सर्वं० | ११ | ६ | | |
| आत्मा कर्त्रादि० | १२ | २ | बृहदारण्यकवार्त्तिकम् | —का० ५५—५६ |

श्रीः

# वेदान्तकल्पलतिकायामुद्धृतवाक्यानामकारादिक्रमेण सूचीपत्रम् ।


| प्रमाणप्रतीकम् | पृष्ठाङ्कः | पङ्क्त्यङ्कः | मूलग्रन्थः | तद्ग० नाङ्कः |
|---|---|---|---|---|
| | | ( अ ) | | |
| अग्निं वागप्येति० | ८३ | १० | छान्दोग्योपनिषद् | ३।२।१ |
| अज्ञानेनावृतं० | ६५ | १५ | भगवद्गीता | ५।१५ |
| अथातो ब्रह्मजिज्ञासा | १ | ४ | ब्रह्मसूत्रम् | १।१।१ |
| अनृतेन हि प्रत्यूढाः० | ६५ | १३ | छान्दोग्यो० | ८।३।२ |
| अन्नमयं हि सोम्य० | ८३ | ६ | छान्दोग्यो० | ६।५।४ |
| अन्यत्र श्रेष्ठात् | ८६<br>८५ | १७<br>११ | ब्रह्मसूत्रम् | २।४।१७ |
| अभिधेयाविनाभूत० | ३९ | १७ | | |
| अभिमानोऽहंकारः० | ८१ | ९ | सांख्यकारिका—का० २४-२६ | |
| अविद्याया अविद्यात्वे० | ६७ | १५ | बृहदारण्यकोपनिषद् वार्त्तिकम्—कारिका १८१ | |
| अविद्यायाः परं पारं० | ६५ | ९ | प्रश्नोपनिषद् | ६।८ |
| अविनाशी वा० | ११ | १ | बृहदारण्यको० | ४।५।१४ |
| अशरीरं वाव० | १२ | १७ | छान्दोग्यो० | ८।१२।१ |
| अस्थूलमनणु० | ४७ | १४ | बृहदारण्यको० | ३।८।८ |
| | | ( आ ) | | |
| आकाशवत्सर्वं० | ११ | ६ | | |
| आत्मा कर्त्रादि० | १२ | २ | बृहदारण्यकवार्त्तिकम् —का० ५५–५६ | |

आनन्दो विषयानुभव० ६४ ८ पञ्चपादिका पृ० ४ पं० ३

( इ )

इच्छाद्वेषप्रयत्न० १० १५ न्यायसूत्रम् अ १।१।१०

( उ )

उत्पत्तिराप्तिर्विकृतिः० १७ १४ बृहदारण्यकवार्त्तिकम्
—का० २३६

( औ )

औत्पत्तिकस्तु० १५ १६ मीमांसासूत्रम् १।१।५

( क )

कामः संकल्पो विचिकि० ७३ ११ बृहदारण्यकोपनिषद् १।५।३
(१)किंच मानाद्विज्ञाता० २३ १४ बृहदारण्यकवार्त्तिकम्
—का० २८९

कृतं कृत्यं प्राप्त० ३८ १०
क्षीयन्ते चास्य० २१ २० मुण्डकोपनिषद् २।२।८

( ग )

ग्रामादि किञ्चिद्वा० २५ ८ बृहदारण्यकवार्त्तिकम्
—कारिका० ८८५–८८८

( च )

चतुष्टयी शब्दानां० ४२ १२

( त )

त इन्द्रियाणि० ८१ ७ ब्रह्मसूत्रम् २।४।७१
तत्स्वभावाद्० ६५ १ श्वेताश्वतरोपनिषद् १।१०
तं त्वौपनिषदं० ५९ ९,१३ बृहदारण्यकोपनिषद् ३।९।२६
तदेतद् ब्रह्म० ४७ ६ ,, २।५।१९

---

(१) "मानाघातासहिष्णुत्वम्" इति मूलग्रन्थे पाठो दृश्यते ।

| | | | |
|---|---|---|---|
| तद् यथेह० | १९ | १ | छान्दोग्यो० ८।१।६ |
| तमेव विदित्वा० | १९, ६४ | १९, १९ | श्वेता० ३।८ |
| तरति शोकम्० | ६५ | १ | छान्दोग्यो० ७।१।३ |
| तरत्यविद्यां० | ६५ | १ | |
| तस्माद् बोधात्मकत्वेन० | ६९ | ८ | मीमांसा वार्त्तिकम्-चोदना सूत्रम्,का० ५३ |
| तीर्णो हि तदा० | ७४ | ६ | बृहदारण्यकोपनिषद् ४।३।२२ |
| तेजोमयी वाक् | ८६ | १३ | छान्दोग्यो० ६।५।४ |
| तेजो वै घृतम् | ८६ | १६ | |
| तेजोऽशितं० | ८६ | १५ | छान्दोग्यो० ६।५।३ |
| त्रयं वा इदं० | ८६ | २२ | बृहदारण्यकोपनिषद् १।६।१ |

( द )

| | | | |
|---|---|---|---|
| दशेमे पुरुषे० | ८१ | ३ | बृहदारण्यकोपनिषद् ३।९।४ |
| दुःखजन्मप्रवृत्ति० | ११ | १७ | न्यायसूत्रम् १।१।२ |
| दैवी ह्येषा गुणमयी० | ६५ | २ | भगवद्गीता ७।१४ |

( न )

| | | | |
|---|---|---|---|
| न चक्षुषा गृह्यते० | ५९, ७२ | १३, १२ | मुण्डकोपनिषद् ३।१।८ |
| न युक्तं कामना० | २५ | ३ | बृहदारण्यकवार्त्तिकम्-कारिका २९० |
| न च पुनरावर्तते | १८ | २१ | कालाग्निरुद्रोपनिषद्, २ |
| न च पुनरावर्तते | ,, | ,, | छान्दोग्यो० ८।१५।१ |

| | | | |
|---|---|---|---|
| नान्यदज्ञानतो० | २६ | १५ | सुरेश्वरवार्त्तिकम् |
| नाभावनिष्ठो० | २८ | ७ | वार्त्तिकम् |
| नावेदविन्मनुते० | ३०, ५९ ७२ | १६, १४ १५ | |
| नासतो विद्यते० | १५ | १८ | भगवद्गीता २।१६ |
| नीहारेण प्रावृताः० | ६५ | १३ | ऋक्संहिता १।८२।७ |

( प )

| | | | |
|---|---|---|---|
| परागर्थप्रमेयेषु० | ६० | १५ | |
| पुरुषापराधमलिना० | ९२ | १ | संक्षेपशारीरकम्-अध्याय १, श्लोक १४ |
| प्रकृतेर्महां० | ८१ | १७ | सांख्यकारिका-कारिका २१ |
| प्रदीपवच्चार्थतो० | ८२ | १८ | ,, का० १३ |

( ब )

| | | | |
|---|---|---|---|
| बुद्धेर्गुणेनात्म० | ७४ | १० | श्वेताश्वतरो० ५।८ |
| (१) बृहतेर्धातो० | ४८ | ९ | ब्रह्मसूत्रशांकरभाष्यम् पृष्ठ ४२ पङ्क्ति ३ |
| बृहबृहि० | ४८ | ४ | धातु पाठः, भ्वादिः ७३६-७३७ |
| ब्रह्मविदाप्नोति० | ४६ | १८ | तैत्तिरीयोपनिषद् २।१।१ |
| ब्रह्म वेद० | ६५ | ६ | मुण्डकोपनिषद् ३।२।९ |

( भ )

| | | | |
|---|---|---|---|
| भूयश्चान्ते० | ६६ | १८ | श्वेताश्वतरोपनिषद् १।१० |

( म )

| | | | |
|---|---|---|---|
| मनसा ह्येव पश्यति | ७४ | ६१ | बृहदारण्यकोपनिषद् १।५।३ |
| मनसैवानु० | ७३, ७४ | २ ५ | ,, ४।४।१९ |
| मृत्योः स मृत्यु० | २० | १४ | ,, ४।४।१९ |
| मृत्युरविद्या० | ६४ | २० | |


(१) "बृहते र्धातोरर्थानुगमाद्" इति पाठो भाष्ये दृश्यते ।

( य )


| | | | |
|---|---|---|---|
| य एतद्विदु० | २० | १३ | श्वेताश्वतरो० ३।१० |
| यतो ज्ञान० | १८ | १० | पञ्चपादिका |
| यतो वा इमानि० | ४७ | १४ | तैत्तिरीयोपनिषद् ३।१।१ |
| | ९७ | १० | |
| यतो वाचो० | ४७ | ११ | ,, २।४।१ |
| | ५९ | १२ | |
| | ७२ | १३ | |
| यत्राप्यतिशयो० | २३ | २१ | मीमांसाश्लोकवार्त्तिकम्-चोदनासूत्रम्, कारिका ११४ |
| यत्साक्षादपरोक्षा० | ८८ | २० | बृहदारण्यको० ३।४।१ |
| यदान्या ओषधयो० | ४६ | ९ | |
| (१)यदाप्नोति यदादत्ते० | ४८ | ११ | पुराणम् |
| यदा सर्वे प्रमुच्यन्ते० | ७४ | ५ | बृहदारण्यको० ४।४।७ |
| यद्वाचानभ्युदितं | ७२ | १२ | केनोपनिषद्, ख० १४ । |
| यन्न दुःखेन० | ४६ | १३ | सांख्यतत्त्वकौमुद्यामुद्धृतोऽयं श्लोकः |
| यन्मनसा० | ३३ | ७ | केनोपनिषद् ख० १५ |
| | ७२ | ११ | |
| यस्य च दुष्टं करणं० | ६९ | ६ | मीमांसाभाष्यम् १।१।६ |
| यौगिको योगरूढश्च० | ४ | १४ | वैयाकरण |


( व )


| | | | |
|---|---|---|---|
| वराहं गावो० | ४६ | १० | |
| विज्ञानं यज्ञं तनुते० | ७४ | १३ | तैत्तिरीयो० २।५।१ |
| विज्ञानादिविशेष० | १२ | ७ | ब्रह्मसिद्धिः |


(१) "यच्चाप्नोति" इत्यादिपाठोऽस्मिन्नादर्शपुस्तके विद्यते ।

| | | | |
|---|---|---|---|
| वियत्पवनतेजोऽम्बु० | ८७ | ८ | पञ्चदशप्रकरणी, प्रकरण श्लो: १८-२२ |
| वियद्वस्तु० | ६० | ७ | बृहदारण्यकवार्त्तिकम् का० ५४३,५४४ |
| वेदेनैव यद्वेदि० | ५९ | १५, | |
| | ७२ | १५ | |

( श )

| | | | |
|---|---|---|---|
| शान्तः खल्वयं० | १३ | १६ | न्यायभाष्यम् १।१ २ |
| शान्तो दान्त० | ७ | १ | बृहदारण्यको० ४।४।२३ |

( स )

| | | | |
|---|---|---|---|
| सत्यं ज्ञान० | ३० | २० | तैत्तिरीयो० २।१।१ |
| | ९० | १० | |
| सत्त्वं लघु० | ८२ | १३ | सांख्यकारिका-का० १३ |
| सधीः स्वप्नो भूत्वा | ७४ | ११ | बृहदारण्यको० ४।३।७ |
| स मानसीनः | ७३ | १ | |
| सर्वे वेदा यत्रैकं | ७३ | १ | |
| समानः सन्नुभ० | ७४ | ११ | बृहदारण्यको० ४।३७ |
| साक्षी चेता० | ७३ | १९ | श्वेताश्वतरो० ६।११ |
| सामान्यकरणवृत्तिः | ८३ | ३ | सांख्यकारिका का—२९ |
| स्त्रीरूपद० | ४२ | ८ | |
| स्थूलापह्नुति० | २७ | ६ | |
| स्वग्राह्यार्थं समा० | ८४ | ५ | |
| स्वतः सिद्धार्थं० | ६० | १० | बृहदारण्यक वार्त्तिकम्-का० ५४२ |

अस्मिन् ग्रन्थे समुद्धृता न्यायाः–

श्रुतिलिङ्गाधिकरणन्यायः—पृ० ३८ पं० ७

वृद्धिमिष्टवतो मूलमपि हारितम्—पृ० ६३ पं० ८

अर्धजरतीयन्यायः—पृ० ७५ पं० १०

तद्धेतोरेव तदस्तु किं तेन—पृ० ७६ पं० १२

यदसाधारणं कारणमिति न्यायः—पृ० ७९ पं–९

—:o:—

# शब्दसूची ।

## (अ)

### अजहत्स्वार्था


लक्षणा शब्दो द्रष्टव्यः पृ० ३९, ८;४९,८

ब्रह्म विश्वस्योपादानम्- पृ० १८,११

अस्यैकत्वम्: पृ० ६२,५

सर्वप्रमाणबाध्यस्वरूपत्वं च० पृ० ६६,१०

दृश्यत्वपरिच्छिन्नत्वजडत्वैरस्य विनाशित्वनिश्चयः पृ० ६६,१७


### अद्वैत


एतत्प्रतिपादकश्रुतेः सदद्वैतपरत्वम् इष्टसिद्धिकार-मतेन पृ० २६,२


### अधिष्ठानत्व


पृ० ५३,५


### अनिर्वचनीय ( जाति )


जातिशब्दो द्रष्टव्यः पृ० ३७,१३-१४


### अनिर्वचनीयख्याति


पृ० ५१,१७


### अनुभव


पृ० ५९,१


### अनुभवत्व


अस्य जातित्वाभावः पृ० ३६,१६

अन्तःकरण

इदं द्विधा ( बुद्धिः मनश्च ) पृ० ८५,१६

अन्यथाख्याति

पृ० ५१,१५;७७,४;७७,९

अपरोक्ष

ज्ञानशब्दो द्रष्टव्यः पृ० ३०,७;६५,९;९०,९ १९

अपरोक्षत्व

एतल्लक्षणम् पृ० ५७,५,८९,१०-१५

इदमर्थनिष्ठम् पृ० ३१,४;९०,१

ज्ञानशब्दो द्रष्टव्यः पृ ८८,१७

अपरोक्षप्रमात्व

प्रमात्वशब्दो द्रष्टव्यः पृ० ५९,१३

अपवर्ग

मोक्षशब्दो द्रष्टव्यः पृ० ४,७

अपुनरावृत्ति

पृ० ६३,१६

अप्रामाण्य

अबोधकत्वलक्षणम् ३१,६

सापेक्षत्वलक्षणम् ७७,१७

अभाव

अस्याधिकरणानतिरिक्तत्वम् पृ० १६,१३ (वेदान्तिमते)

अस्याविद्याप्रतियोगिकस्य चैतन्यात्मकत्वम् पृ० २६,१०

एतत्कल्पनाऽविद्यामूला पृ० २६,१३

अयं भूतलादिस्वरूपः प्राभाकरमते पृ० २८,२

एतत्प्रतियोगिकाभावस्तार्किकैर्नाङ्गीक्रियते पृ० २८,५

अभिधा

वृत्तिशब्दो द्रष्टव्यः पृ० ३५,१७

अर्थक्रियाकारित्व

पृ० ५१,१८

अवच्छेदक

अस्य कल्पितत्वम् पृ० ५१,१,५

अवच्छेदकद्वैविध्य

पृ० १८,३

अवच्छेद्य

अस्य वास्तवत्वम् पृ० ५१,२

अविद्या

अस्याः सर्वदुःखोपादानत्वम् पृ० ६,६

० निवृत्तिर्दुर्निरूपा पृ० २४,१

० निवर्त्तेर्दुर्निरूपत्वखण्डनम् पृ० २५,१६

० पञ्चमप्रकारत्वम् इष्टसिद्धिकारमते पृ० २५,१७

० निवृत्तेः सम्भाव्याः पञ्च प्रकाराः पृ० २५,७ २६,१

० निवृत्तेः पञ्चमप्रकारत्वनिरासः पृ० २६,१०

० निवृत्तेः स्वरूपं ग्रन्थकारमते पृ० २६,१४

(आ)

आकाश

अस्य श्रोत्रकारणत्वम् पृ० ८६,

आत्मन्

अस्य स्वरूपम्—

(१) नास्तिकमतेन—
(क) लौकायतिकमतेन पृ० २,५
(ख) सौगतमतेन—
A. विज्ञानवादिमतेन पृ० २,१२
B. माध्यमिकमतेन पृ० २,१७
(ग) आर्हतमतेन पृ० २,२०
(२) आस्तिकमतेन—
(क) वैशेषिकतार्किकप्राभाकरमतेन पृ० ११,१३
(ख) भट्टाचार्यमतेन पृ० १४,९
(ग) नव्यमीमांसकमतेन पृ० १५,७
(घ) सांख्ययोगमतेन पृ० १५,१२
अस्य नित्यानुमेयत्वम् पृ० २२,१७ (सांख्यादिमतेन)
० यौगिकत्वं पुराणे दर्शितम् पृ० १८,१०

आप्तवाक्य

अस्य शक्तिग्राहकत्वम् पृ० ४५,१८

आरम्भवाद

पृ० ७६,२०

आर्यसमाज

पृ० ६३,२०

आस्तिक

पृ० १०,२; ८९,११

(इ)

इन्द्रिय।

ज्ञानकर्मभेदेनास्य द्वैविध्यम् पृ० ८५,६
शब्दस्यैतद्विशेषत्वशङ्का पृ० ८७,१८

(१) एतल्लक्षणम्—
(क) न्यायवैशेषिकमतेन पृ० ७८,५ ७
(ख) सांख्यमतेन पृ० ८३,१
(ग) सिद्धान्तमतेन पृ० ८५,१०
अपरस्यास्य बहिरिन्द्रियानुगतत्वम् । पृ० ८०,३-५

इष्ट

एतद् द्विविधम् पृ० २४,१४
(क) वस्तुतोऽप्राप्तम्, पृ० २४,१५
(ख) प्राप्तमप्यप्राप्तमिव पृ० २४,१६

(ई)

ईश्वर

एतज्ज्ञानस्यापरोक्षत्वम् पृ० ८८,१०

(उ)

उदान

पृ० ८५,१८

उपचार

वृत्तिशब्दो द्रष्टव्यः पृ० ४०,२

उपमान

अस्य शक्तिग्रहे कारणता पृ० ४५,८

उपलक्षण

अस्य स्वोत्तरकाले व्यावर्तकत्वम् पृ० २९,१ (औपनिषदमतेन)

उपस्थेन्द्रियः

पृ० ८७,५

उपाधिसांकर्य

अस्य दोषत्वाभावः पृ० ८८,१

उपासना

अस्या मुक्तावावश्यकीत्वम् पृ० ३,१० ( वैशेषिकमतेन )

(ऐ)

ऐकभविकपक्ष

अस्य निर्युक्तिकत्वाद् निराकरणम् पृ० २१.५

(क)

करण

ज्ञानकरणत्वावच्छेदेन परोक्षज्ञानजनकत्वम् पृ० ३०,११

कल्पित

अवच्छेदकशब्दो द्रष्टव्यः पृ० ५१,१

विषयताशब्दो द्रष्टव्यः पृ० ६०,१८

प्रकारशब्दो द्रष्टव्यः पृ० ६०,१८

काणाद

एतन्मतं तत्तद्विषयकं तत्तच्छब्दोपरि द्रष्टव्यम् ।

कामना

इयं मोक्षविषयिणी तत्साधनविषयिणी च नोदेतु-
मर्हति पृ० ७, १८

(१) चार्वाकाणाम् पृ० ८१

(२) सौगतानाम्—

(क) योगाचाराणाम् पृ० ८,६

(क १) सन्ताननिवृत्तिपक्षे पृ० ८,६

(क २) सन्तानान्तर्भावपक्षे पृ० ७, १०

(ख) शून्यवादिनाम् पृ० ९,३ (माध्यमिकानाम्)

(३) आर्हतानाम् पृ० ९,५

(४) औपनिषदातिरिक्तास्तिकानाम् पृ० १०,२

(५) वैशेषिकतार्किकप्राभाकराणाम् पृ० ११,२०

(६) मीमांसकानाम्—

(क) भट्टाचार्याणाम् पृ, १४, ९

(ख) आत्माभिन्नसुखवादिनाम् पृ० १५,४ (जरन्मीमांसकानाम्)

(ग) नव्यमीमांसकानाम्० १५, ७

कार्य

एतल्लक्षणम् ८२, १६

कैवल्य

मोक्षशब्दो द्रष्टव्यः पृ० १६, ५१

क्षोदक्षम

पृ० ३४,१७;५०,९

क्रियाशक्ति

अस्या रजःपर्यायता पृ० ८६,२

(ग)

गौणी

वृत्तिशब्दो द्रष्टव्यः पृ० ३९,९

अस्या ब्रह्मण्यसम्भवः पृ० ४४,६;४९,१५

तत्र चास्याः स्वीकारः संक्षेपशारीरककाराणां मौत्या ४९,१७

(घ)

घ्राणम्

अस्य पृथिवीकार्यत्वम् पृ० ८६,८

(च)

चक्षुः

अस्य तेजःकार्यत्वम् पृ० ८६,७

चार्वाक=लौकायतिक

लौकायतिकशब्दो द्रष्टव्यः पृ० ८१,

चित्तदोष

अयं षड्विधः
एतन्निवृत्तिक्रमः } पृ० ९१,४–९१,१७

चेतन

आत्मशब्दो द्रष्टव्यः ।

चैतन्य

आत्मशब्दो द्रष्टव्यः ।

अस्याज्ञाननिवर्तकत्वम् पृ० ५०,१६

चैतन्यविषयता

अस्या जडत्वापादकत्वम् पृ० ५९,११

चैतन्यापरोक्षता

अस्याः स्वरूपातिरिक्तत्वानिरूपणम् पृ० ८९,६–७

(ज)

जघन्या

अस्या निरूपणम् पृ० ३४,११

इयं द्विविधा

इयं तृतीयाऽप्येकेषां मते पृ० ३९,८

वृत्तिशब्दो द्रष्टव्यः

### जडत्व

अस्याज्ञानविनाशित्वनिश्चये हेतुत्वम् पृ० ६६,१७

एतदापादकत्वं फलत्वव्याप्यत्वस्य पृ० ५९,२१

### जन्यप्रत्यक्षत्व

अस्य जातित्वेऽभ्युपगमवादः ८८,१३

### जहदजहल्लक्षणा

लक्षणाशब्दो द्रष्टव्यः पृ० ४३,१९;४६,१०

अस्या जहदजहत्स्वार्थलक्षणापदेनापि व्यपदेशः पृ० ३

### जहदजहत्स्वार्था

अस्या उद्देशः पृ० ४२,४

अस्या लक्षणम् पृ० ५२,१९

० ब्रह्मणयसम्भवश्च पृ० ४६,१०

इयमेव भागलक्षणा पृ० ४३,५

### जहत्स्वार्था

अस्या उद्देशः पृ० ४२,४

० लक्षणम् पृ० ५५,१

० ब्रह्मणयसम्भवश्च पृ० ४९,१३

### जाति

अस्या गुणगताया अस्वीकारो मीमांसकमतेन पृ०२२,३;८०,१०

वेदान्तिमतेऽस्या अनिर्वचनीयत्वम् पृ० ३७,१४

### जातिसांकर्य

अस्यादूषकत्वम् पृ० ८८,२

जीवन्मुक्ति

अस्यामुपपत्तिं वक्ष्याम इति प्रतिज्ञा पृ० ६६,५

ज्ञान

अस्य द्रव्यत्वम् पृ० ५८,९

अज्ञाननिवर्तकस्यास्य स्वरूपे विकल्पः एतन्निवर्तकत्वासम्भवश्च पृ० २९,६

इदं द्विविधम्—

(१) केवलचैतन्यम् पृ० २९,७

(२) वृत्तिरूपम् पृ० २९,१०

सत्यत्वादिना विकल्प्य तदसम्भवप्रतिपादनञ्च पृ०२९,१०

तथाहि—

(क) सत्यत्वेन पृ० २९,१०

(ख) मिथ्यात्वेन पृ० २९,१२

(ग) सप्रकारकत्वेन पृ० २९,१७

(घ) निष्प्रकारकत्वेन पृ० ३०,२

(ङ] परोक्षत्वेन पृ० ३०,७

(च) अपरोक्षत्वेन पृ० ३०१०

मिथ्याभूतादप्यस्मात्पारमार्थिकी ब्रह्मप्राप्तिर्न विरुध्यते पृ० ५२,१४

(त)

तादात्म्य

अस्य कार्यकारणयोर्भाट्टैः स्वीकारः पृ० १५,१०

तेजः

अस्य घृतादिस्निग्धद्रव्यवाचकत्वम् पृ० ८६,१४

त्वच्

अस्या वायुकार्यत्वम् पृ० ८६,६

(द)

दुःख

अस्य बुद्धिधर्मत्वं सांख्ययोगैर्मन्यते पृ० १५,१३

एतल्लक्षणम् (नैयायिकमतेन) पृ० ४,१

(ध)

धर्म

अस्य योगजस्य पदार्थसामर्थ्यानुसारेणातिशयहेतुत्वम्
पृ० २२,२०

धर्मकल्पना

इयं लघ्वी धर्मिकल्पनापेक्षया पृ० ७१,९

धर्मिकल्पना

पृ० ७१,९

ध्वंस

अस्य विनाशिभावरूपप्रतियोगिनिष्ठातिशयविशे-
षानतिरिक्तत्वम् पृ० १६,१३

अस्य तार्किकाभ्युपगतस्य निष्प्रतियोगिकस्याऽसिद्ध-
त्वम् पृ० १६,१९

अयं सदसद्विलक्षणः पृ० १७,६

(न)

नास्तिक

एषां मते मोक्षकामनाऽनुपपत्तिः पृ० १०,१

निर्विकल्प

सत्यादिपदेभ्योऽपि एतद्रूपविशिष्टतया उपस्थितेर-
सम्भवः पृ० ४७,२

अस्य तार्किकसिद्धस्य नित्यानुमेयत्वेनापरोक्षत्वा-
भावः पृ० ५६,२१

निश्चयत्व

एतल्लक्षणम् पृ० ५६,१

नीलाचलनाथ

एतद्भजनेनाज्ञाननिवृत्त्यनुभवः पृ० ६५,१८

नीलाचलनायक

पृ० ६,३

(प)

पदार्थ

एषां षट्त्वं वैशेषिकमतेन पृ० ३,९

पदार्थज्ञान

अस्य प्रमाणान्तरावश्यकत्वम् पृ० १९,८

परमाणु

एतत्स्वरूपस्य मनसोऽप्रामाणिकत्वम् पृ० ४२ २६

परोक्ष

ज्ञानशब्दो द्रष्टव्यः पृ० ३०,११

परोक्षत्व

अस्य जातित्वाभावः पृ० ८८,३

अस्य जातित्वाशङ्का तत्खण्डनं च पृ० ८८,७

पादेन्द्रिय

अस्य तेजःकार्यत्वम् पृ० ८७,३

पाय्विन्द्रिय

अस्य जलकार्यत्वम् पृ० ८७,४

पारमार्थिकत्व

अस्य बाधाभावस्य प्रयोजकत्वम् पृ० ५२,१७

पुरुषोत्तम

एतद्दर्शनादिना पापादिनिवृत्तिः पृ० १८,५

प्रकार

अस्य भासमानवैशिष्ट्यप्रतियोगित्वम् ६१,१

प्रतिबन्धचतुष्टय

अस्य स्वरूपम् ६९,६२

कल्पितेनाप्येतेन प्रतिबिम्बवास्तवबिम्बानुमानम्
पृ० ५२,१०

प्रत्यक्ष

इदमेव केवलं प्रमाणं लौकायतिकमतेन पृ० २,८

अस्य विद्यमानोपलम्भत्वनियमः पृ० ७७,६

तत्त्वं न जातिः पृ० ८८ १५

प्रत्यभिज्ञा

अस्या स्मृतेः कारणतानिरासः पृ० ७६,६

प्रमात्व

अज्ञाननिवर्तकस्यास्य प्रमाणफलावस्थास्वरूपम् पृ०
५४,७;५७,४ पृ० ६१,१३

प्राण

अयं वृत्तिभेदात्पञ्चधा पृ० ८५,१७

( फ )

फल

अस्य चैतन्यमात्रपरत्वम् पृ० ६०,४
एतद्रूपाप्यस्वस्य जडत्वापादकत्वम् ५९,१९

(ब)

बाध्यबाधकभाव

अत्र बीजस्वरूपम् पृ० ३८,८–९

बिम्ब

अस्य प्रतिबिम्बापेक्षया वास्तवत्वम् पृ० ५२,११

बुद्धि

अन्तःकरणशब्दो द्रष्टव्यः पृ० ८५,१६

ब्रह्म

अस्य व्युत्पत्तिः पृ० ४८,५
० यौगिकार्थश्च पृ० ४८,७–८
निर्विकारावस्थम् पृ० १९,११

ब्रह्मविषयता

अस्याः स्वरूपम् पृ० ५८,५–६

( भ )

भागलक्षणा

लक्षणाशब्दो द्रष्टव्यः पृ० ४३,५

भावत्व

अज्ञानाविनाशित्वप्रयोजकस्यास्य स्वरूपप्रश्नः पृ० ६६,८

भावना

अस्याश्चातुर्विध्यं योगाचारमतेन पृ० ११,१७
एतच्चतुष्टयस्य मोक्षहेतुत्वं सौगतमतेन पृ० १९,१८

अत्र मानाभाव इति सिद्धान्तः पृ० १९,१८
साधनशब्दो द्रष्टव्यः

भावना

परोक्षज्ञानजन्याया अस्या अपरोक्षज्ञानाजनकत्वम्
पृ० ७०,५

भ्रान्ति

अस्याः प्राभाकरैरस्वीकारः पृ० २१,१९

( म )

मनस्

अस्य परोक्षापरोक्षज्ञानजननस्वभावाङ्गीकारः पृ० ७७,१८
अस्य प्रामाण्यम् पृ० ७१,१०
अन्तःकरणशब्दो द्रष्टव्यः पृ० ८५,१६

मानसीनत्व

अस्य लक्षणम् पृ० ७३,४

मिथ्यात्व

अस्य द्वैविध्यम् पृ० ५२,७–८
(१) स्वरूपतः
(२) विषयतः

मुख्या

एतल्लक्षणम् ( तार्किकमतेन ) पृ० ३४,१२
,, ( मीमांसकमतेन ) पृ० ३४,१५
वृत्तिशब्दो द्रष्टव्यः

मुमुक्षु

अस्य स्वरूपम् पृ० १४,१४

## मूलाज्ञान

अस्य सर्वशक्तिमत्त्वम् पृ० ६३,११
अस्य नाशे न पुनरावृत्तिः पृ० ६३,१३

## मोक्ष

एतत्स्वरूपं तत्तन्मतेन—

(१) तत्र लौकायतिकानाम् पृ० २,४
(क) तदेकदेशिनाम् पृ० २,१०
(२) सौगतानाम्—
(क) विज्ञानवादिनाम् पृ० २,१२
(ख) माध्यमिकानाम् पृ० २,१७
(३) आर्हतानाम् पृ० २,२०
(४) काणादानाम् पृ० ३,६
(५) नैयायिकानाम् पृ० ३.१३
(६) अपरेषाम्–(मीमांसकविशेषाणाम् ) ४,४
(७) प्राभाकराणाम् पृ० ४,८
(८) भाट्टानाम् पृ० ४,१२
(९) तदनुयायिनाम् पृ० ४.१८
(१०) साङ्ख्यानाम् पृ० ४,१८
(११) पातञ्जलानाम् पृ० ५,३
(१२) त्रिदण्डिनाम् पृ० ५,९
(१३) तद्विशेषाणाम् पृ० ५,१३
(१४) तदनुयायिनामपरेषाम् पृ० ५,१४
(१५) पाशुपतानाम् पृ० ५,१८
(१६) वैष्णवानाम् पृ० ५,२०
(१७) हैरण्यगर्भानाम् पृ० ५,२२
(१८) औपनिषदानाम् पृ० ६,३;५०,९, ९२,१८

औपनिषद्पक्षातिरिक्तपक्षपणपत्रसंख्या कामना-
साधनशब्दपत्रसंख्ययैव गतार्थेति नेहोपन्यस्ता ।

( य )

योग

एतल्लक्षणम् पृ० ३८,१
एतस्यापि कारणता ब्रह्मपदशक्तिग्रहे नास्ति पृ० ४८,३

योगरूढि

इयं भाट्टैर्नैयायिकैश्च स्वीक्रियते, पृ० २०,१२
,, प्राभाकरैर्वेदान्तिभिश्च नाभ्युपगम्यते पृ० २०,१४

( र )

रजस्

अस्य स्वकार्यं प्रति चालकत्वम् पृ० ८२,१३

रसन

अस्याप्राकार्यत्वम्, पृ० ८६,७

रूढि

अस्या लक्षणम् पृ० ३७,१७
इयं सर्वतो बलवती ३८,४
अस्या ब्रह्मण्यसम्भवः प० ४४,७

( ल )

लक्षणा

अस्या उपपत्तिरन्विताभिधानवादे पृ० ३६,५
अस्याः पदार्थनिष्ठत्वम् अभिहितान्वयवादे पृ० ३६,१४
एतल्लक्षणम् पृ० ३८,९
अस्यास्त्रैविध्यम् पृ० ४२,२
अस्या द्वैविध्याशङ्का तत्समाधिश्च पृ० ४३,१५

(१) अजहत्स्वार्था—
अस्या उद्देशः पृ० ४२,३
,, लक्षणम् पृ० ४२,४
,, असम्भवसम्भवं पृ० ४९,८
(२) जहदजहत्स्वार्था—
जहदजहत्स्वार्थाशब्दो द्रष्टव्यः
(३) जहत्स्वार्था
जहत्स्वार्थाशब्दोद्रष्टव्यः

## लिङ्ग

अस्य षड्भेदाः पृ० ६१,१

## लौकायतिक

एतन्मतं तत्तद्विषयकं तत्तच्छब्दोपरि द्रष्टव्यम् ।

## ( व )

## वर्ण

एषां कल्पितह्रस्वत्वादिसंसर्गावच्छिन्नानां यथार्थज्ञान-कर्तृत्वं मीमांसकैरिष्यते पृ० ५१,१

## वाक्

अस्या आकाशकार्यत्वम् पृ० ८६,१०
,, तैजसत्वाशङ्का तन्निरासश्च पृ० ८६,१३

## वाक्यशेष

अस्य शक्तिग्राहकत्वम् पृ० ४६,८
स च द्विविधः—
(१) विधिरूपः—पृ० ४६,८ ४७,४
(२) निषेधरूपश्च पृ० ४७,५-४८,२

विज्ञानवादिन्

एतन्मतं तत्तद्विषयकं तत्तच्छब्दो परि द्रष्टव्यम्

विशेषगुण

एते मनःसंयोगजन्या नवसंख्याका वैशेषिकतार्किकप्राभाकरैरङ्गीक्रियन्ते पृ० ११,१३

विश्वेश्वर

अयं ग्रन्थकृतो दीक्षागुरुः पृ० १,९

विषयता

अस्याः कर्मत्वापादकत्वम् पृ० ५७,१०

,, वास्तवत्वास्वीकारः पृ० ५८,२

इयमतिरिक्ता नैयायिकैर्नाङ्गीक्रियते पृ० १५,१

वृत्ति

पदानामियं द्विधा पृ० ३४,१०

(१) मुख्या=अभिधा=शक्तिः

अस्या उद्देशः पृ० ३४,११

अस्याः स्वरूपं तार्किकमतेन पृ० ३४,१३

,, ,, मीमांसकमतेन पृ० ३४,१५

,, ,, सिद्धान्तमतेन पृ० ३५,८

एतद्ग्रहोपायाः पृ० ४४—४७

इयमपि द्विविधा—

(क) रूढिः (रूढिशब्दो द्रष्टव्यः)

(ख) योगः (योगशब्दो द्रष्टव्यः)

(२) जघन्या

इयमपि द्विविधा

(क) लक्षणा ( लक्षणाशब्दो द्रष्टव्यः )
(ख) गौणी
अस्या उद्देशः पृ० ३९,९
„ लक्षणम् पृ० ३९,१३
„ अतिरिक्तत्वसिद्धान्तः पृ० ४०,१३
„ ब्रह्मण्यसम्भवः पृ० ४९,१५
ब्रह्मणि स्वीकारः संक्षेपशारीरककाराणां प्रौढिवादमात्र-
मिति संप्रदायः पृ० ४९,१८
इयमालङ्कारिकैर्लक्षणामध्येऽन्तर्भाविता पृ० ४१,१
(ग) उपचाराख्याप्यपरा जघन्येत्येके पृ० ४०,१
अस्या लक्षणम् पृ० ४०,२
(३) व्यञ्जना
इयमालङ्कारिकैस्तृतीया वृत्तिर्मन्यते पृ० ४१,१
अस्यास्त्रैविध्यम् पृ० ४१,१३–१४
एतत्खण्डनम् पृ० ४१,१६
अस्या अभ्युपगमेन स्वीकारश्च पृ० ४२,१
„ ब्रह्मण्यसम्भवश्च पृ० ५०,१

वृत्ति

( इयं ज्ञानाख्या )
अस्या अन्यथासिद्धत्वम् पृ० ५०,१७
एतद्विषयताया जडत्वानापादकत्वम् प० ५९,११

वृद्धि

पृ० ६३,८

वैधर्म्य

अस्य शक्तिग्राहकत्वम् पृ० ४५,१३

व्यञ्जना

वृत्तिशब्दो द्रष्टव्यः

व्यान

पृ० - ८५,१८

( श )

शब्द

अस्यापरोक्षज्ञानाजनकत्वाशङ्काः पृ० ३०,१०

अस्य षड्विधत्वं वैयाकरणमतेन पृ० ४०,१४

शक्ति

अस्या अतिरिक्तपदार्थत्वम् मीमांसकमतेन पृ० ३५ १०

वृत्तिशब्दो द्रष्टव्यः

शाब्दत्व

इदं द्विविधम् पृ० ४३,२

श्रुतार्थापत्ति

अनया ब्रह्मज्ञानस्याज्ञाननिवर्तकत्वसाधनम्

पृ० ६४,१८;६५,१०

श्रुति

अनयाऽपि ब्रह्मज्ञानस्याज्ञाननिवर्तकत्वसाधनम्

पृ० ६४३९

श्रोत्र

अस्याकाशजत्वम् पृ० ८६,४

( स )

सत्तानवधारण

अस्य लक्षणम् पृ० ५५,१९

सत्यत्व

एतल्लक्षणम् पृ० ५२,३-५

समवाय

पृ० ४२,१७

संप्रदाय

पृ० ४९,१८

संसर्ग

मीमांसकमतेऽसतोऽप्यावच्छेदकत्वम् पृ० ६१,१६

साधन

औपनिषदपक्षातिरिक्तस्य मोक्षविषयकस्यास्य निराकरणम्—

तत्र-सौगतानाम् पृ० १९,१५

आर्हतानम् पृ० २०;६

नैयायिकवैशेषिकाणाम् पृ० २०,७

ऐकभविकानाम् पृ० २१,५

साङ्ख्यानाम् पृ० २१,७

प्राभाकराणाम् पृ० २१,१८

योगिनाम् पृ० २२,५

औपनिषदपक्षेऽपि तदनुपपत्तेराशङ्का तत् समाधिश्च पृ० २३,१०

सामान्य

इदमनिर्वचनीयम् पृ० ३७,१४

सिद्धत्व

एतल्लक्षणानि पृ० २६,९

स्मृतित्व
अस्य जातित्वाभावः पृ० ७६,१६
स्वभाव
आस्तिकेनैतद्वादास्वीकारः पृ० ८९,२२
स्वभावत्व
आगन्तुकस्यैतदनुपपत्तिः पृ० ५५,१२
स्वरूप
पृ० ८९१८,९०-९



# अथ शुद्धिपत्रम्

| पृष्ठ | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ५ | १८ | पाशुपत | यथोक्तपाशुपत |
| ६ | १७ | परिचयाय | प्रतिबन्धपरिचया |
| ८ | ६ | सौगत | अतः सौगत |
| ,, | ८ | स्वयमेवाभावात् | स्वस्यैवाभावात् |
| ,, | २२ | B…भोक्तृत्व | A…भोक्तृ– |
| ,, | १८ | वादापतेः | वादापत्तेः |
| ९ | २५ | A…परिमाणत्व | B…परिमाणत्व |
| ,, | २६-२७ | A स्वर्गान्तर्भाव | स्वर्गादावन्तर्भावेन |
| १० | १८ | स्वयमस्वार्थ एव | स्वयमसंहतः स्वार्थ एव |
| ११ | १ | अविनाशि | अविनाशी |
| १६ | ६ | पा | वा |
| ,, | ११ | (१) | |
| ,, | २० | ता निष्प्रति | तानिष्प्रति |
| १९ | ४ | कालेनानावृत्ति | कालेऽनावृत्ति |
| २० | १९ | तेन | तेन तेन |
| २३ | २ | भट्टाचार्य्याः | भट्टाचार्य्याः |
| ,, | ८ | नन्दैकधानात्मकम् | नन्दैकतानात्मकम् |
| २४ | १ | दुर्निरूपत्वात् | दुर्निरूपत्वात् |
| २५ | ५ | कालावच्छिन्न | कालानवच्छिन्न |
| ,, | १६ | निवृत्तदुर्निरूपत्व | निवृत्तेदुर्निरूपत्व |
| २६ | १२ | स्वेऽप्ययं | स्वेऽवश्यं |

| पृष्ठ | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २७ | ५ | द्वैता | द्वैता |
| ,, | ६ | स्थूलापह्नुति | स्थूलापह्नु ति |
| २७ | १० | नानान्येन | नान्येन |
| २८ | ७ | निष्टो | निष्ठो |
| ,, | १८ | प्रागऽपि | प्रागपि |
| ३० | ६ | कारकज्ञाना | कारकाज्ञाना |
| ,, | १६ | बिन्मनुते | विन्मनुते |
| ३२ | २१ | स्यस्यस्वयं | स्य स्वयं |
| ,, | २२ | ऽतमाश्रिता | ट्माश्रित |
| ३३ | ७ | मनसा मनुते | मनसा न मनुते |
| ३४ | ९ | धर्मोती | धर्मोती— |
| ३७ | ८ | बाध | बाधक— |
| ३७ | २० | B | A |
| ३८ | २ | शब्द | शब्द् |
| ३९ | १३ | सबन्धो | संबन्धो |
| ,, | १८ | रिष्ट | रिष्टा |
| ४० | २ | नियतसंबन्धेनान्यत्र वृत्तिर्लक्षणा, | A inserts this reading (in note). |
| ४१ | १ | ख्याऽपरा | ख्याऽपरा |
| ४१ | २ | मुख्या लक्षणा | मुख्या लक्षणा |
| ४२ | ५ | वाच्यार्यो | वाच्यार्थो |
| ,, | १२ | चतुष्टयी शब्दानां वृत्तिरिति | "चतुष्टयी शब्दानां वृत्तिः" इति |

| पृष्ठ | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ,, | १४ | इत्पादौ गुणः | इत्यादौ गुणः |
| ,, | १९ | शक्यैकदेश वृत्तिः | शक्यैकदेशे वृत्तिः |
| ५४ | १ | जहल्लक्षणा | जहल्लक्षणा । |
| ५६ | १३ | वाक्यशे | वाक्यशे — |
| ५७ | १२ | निवर्तन्ते न | निवर्तन्ते" "न |
| ५९ | ११ | न्तरानु | न्तरानु- |
| ५० | ९ | क्षोदक्षमं | क्षोदक्षेमं |
| ५० | १५ | न्तःकरणा | न्तःकरण |
| ५२ | ६ | बिषय | विषय |
| ५३ | २ | कारकैव | कारिकैव |
| ५४ | १ | तज्ज्ञानस्य | तज्ज्ञानस्य |
| ,, | १२ | प्रक्कार | प्रकार |
| ५६ | १ | निश्चयत्व | निश्चयत्व |
| ,, | ७ | निवर्तें | निवर्त |
| ,, | १२ | प्रत्यक्षानुमि | प्रत्यक्षानुमि- |
| ,, | १४ | प्रत्यक्षत्वा(१) | प्रत्यक्षत्वा(१)- |
| ५७ | २१ | निबर्तकता | निवर्तकता |
| ,, | २१ | मुपचर्यत- | मुपचर्यत |
| ५८ | २० | अन्वदेव | अन्यदेव |
| ६० | ८ | कुम्भस्यैवं दशा | कुम्भस्यैवं दृशा |
| ,, | १९ | क्ति प्रमा | क्तिप्रमा |
| ६२ | १८ | स्वीकारे | स्वीकारे |

| पृष्ठ | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ६३ | २१ | (३) B | (३) A |
| ६४ | २० | रविद्य | रविद्या |
| ६५ | १ | तत्त्वभावाद्भूयश्चा | "तत्त्वभावाद् भूयश्चा |
| ,, | १३ | प्रत्यूढा नीहारेण | प्रत्यूढाः" "नीहारेण |
| ,, | १४ | प्रावृता | प्रावृताः |
| ६६ | १२ | प्रतिकू लतर्क परा | प्रतिकूलतर्कपरा |
| ६७ | ९ | तत्त्वज्ञानवि | तत्त्वज्ञानवि— |
| ६७ | १६ | माना(२)द्यात्मा | माना(२) घाता |
| ,, | १९ | युज्यत | युज्यते |
| ७० | ६ | बह्वृच | वह्वृच |
| ,, | ८ | कलृप्त | कलृप्त |
| ,, | १९ | संबादा | संवादा |
| ,, | २१ | वैदिकम | वैदिकमे |
| ७१ | १६ | भेध | मेध |
| ७२ | ४ | तानावभयत्वापेक्षत्वं | तानाश्रयत्वापेक्षत्वं |
| ७२ | १० | भात् | मात् । |
| ,, | १५ | स्त्रहन्तम् । वेदेनैव | स्त्रहन्तम्" । "वेदेनैव |
| ,, | १९ | तत्त्वौ० | तं त्वौ० |
| ,, | २१ | महत्व नालोकादि | महत्त्वेनालोकादि |
| ७४ | ७ | हृदयरय | हृदयस्य |
| ,, | ८ | कामादीना | कामादीनां |
| ,, | १० | द्वैगुणे | द्वैगुणे— |
| ,, | ,, | चैव" "आरा | चैव आरा |

| पृष्ठ | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ,, | १३ | विविज्ञानं | विज्ञानं |
| ७५ | १६ | क्षुषः | क्षुषः संस्कारसहकारेण-परोक्षज्ञानजनकत्वम्, अथवा संनिकृष्टविषयेऽ-परोक्षज्ञानजनकस्वभावस्य चक्षुषः |
| ७६ | १७ | तृतीय,ः | तृतीयः, |
| ,, | १८ | मस्तियेन | मस्ति येन |
| ,, | २१ | ज्ञात्पादकत्व | ज्ञोत्पादकत्व |
| ७७ | ४ | न्यथांख्याति | न्यथाख्यातिं |
| ,, | १२ | नैतावतासापेक्ष | नैतावतासापेक्ष |
| ,, | १८ | परोक्षापा- | परोक्षाप- |
| ७८ | ८ | ततश्चक्षु | तच्चक्षु |
| ,, | १३ | निरूपितत्वं पदार्थो | निरूपितत्वंपदार्थो- |
| ७९ | १३ | सामग्याः | सामग्र्याः |
| ७९ | २१ | (३) इति | (३) इति |
| ८० | ४ | शब्देऽपिसामान्य | शब्देऽपि सामान्य |
| ,, | ५ | ज्ञानेऽ | ज्ञानेऽ- |
| ,, | ९ | सतेप्तस्व | समस्व |
| ,, | १६ | रादीना | रादीनां |
| ,, | २० | याणा मती | याणामती |
| ८१ | १ | वहार | तद्व्यवहार |
| ,, | ३ | आत्मै- | आत्मै- |

| पृष्ठ | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ,, | ७ | नेन्द्रियाणि | त इन्द्रियाणि |
| ८२ | १५ | चावरणक | चावरण |
| " | २० | (२) B | (२) A |
| ,, | २१ | सात्त्विकाहं | सात्विकाहं |
| ८३ | १२ | भूर्तं | भूर्त |
| ८४ | ६ | रुपवत् | रूपवत् |
| ,, | १४ | भोगार्थंवागा | भोगार्थं वागा |
| ,, | २२ | ङ्याप्ति | ङ्याप्ति |
| ८७ | ४ | तादृशाप्कार्ये | तादृशापकार्ये |
| ८९ | २० | पण्डित्यं | पाण्डित्यं |
| ९० | ६ | दशमस्त्वपसि | दशमस्त्वमसि |
| ,, | ११ | मनतन्तं | मनन्तं |
| ९१ | ३ | ब्रह्मविद्योपदेशेन | ब्रह्मविद्योद्देशेन |
| ,, | १३ | ग्यप्रति | ग्युप्रति |
| ९२ | ५ | नात्मफला | नात्मफला ॥ |
| ,, | ,, | पगमे यथा | पगमेतु यथा |
| ९३ | २ | टुष्ट | दुष्ट |
| ,, | ४ | मोक्षंव्याचक्षते | मोक्षं व्याचक्षते |

